॥ श्रीः ॥

हरिदास संस्कृत ग्रन्थमाला
२३३



# रसगङ्गाधर-रहस्यम्

( रसगङ्गाधर-प्रश्नोत्तरी )

रचयिता—
आचार्यः श्रीमदनमोहनझा
मुजफ्फरपुर-धर्मसमाजसंस्कृतकालेजप्राध्यापकः




चौखम्बा अमरभारती प्रकाशन
भारतीय सांस्कृतिक साहित्य के प्रकाशक व विक्रेता
पोस्ट बाक्स संख्या ११३८
के० ३७/१३०, गोपाल मन्दिर लेन
वाराणसी–२२१००१ ( भारत )

प्रकाशक
चौखम्बा अमरभारती प्रकाशन
पोस्ट बाक्स ११३८
के. ३७/१३०, गोपाल मन्दिर लेन
वाराणसी २२१००१, फोन-३३३५०८



सप्तम् संस्करण, सन् १९९७ ई०
वि. सं. २०५४
मूल्य १५-००

अपरं च प्राप्तिस्थानम्
चौखम्बा संस्कृत पुस्तकालय
कचौड़ी गली
वाराणसी-२२१००१

मुद्रक—
चारु प्रिन्टर्स, वाराणसी

# अवतारणा

आचार्यः श्रीरामचन्द्रमिश्रः

मुजफ्फरपुर-धर्मसमाजसंस्कृतकालेजप्राध्यापकः

प्रायो जानन्त्येव सर्वेऽपि संस्कृतशिक्षा-संबद्धा विद्वांसो यदिह जगति संस्कृतसाहित्यतत्त्वमीमांसासाधनीभूतेषु संस्कृतभाषासंदृब्धेषु प्रबन्धेषु सर्वातिशायिसौभाग्यो रसगङ्गाधरनामा पण्डितराजजगन्नाथरायप्रणीतो निबन्ध इति। यादृश्येवार्थचमत्करणचातुरी तादृश्येव शब्दसज्जा, यादृश एवान्यदीयमतदूषणावसरे तर्कप्रसरस्तथाविध एव स्वमतस्थापनसमये युक्त्यवतारणप्रकारः, यादृगेवोदाहरणनिर्माणचतुर्यं तादृगेवोदाहृतपद्यमर्मविवेचनवैदुष्यमत्र विद्यत इति कन्याकुमारीमारभ्य हरपर्वतपर्यन्तं वङ्गोपसागराच्च पश्चिमोदधिवेलां यावदस्य प्रचारः प्ररूढप्रकामप्रसारस्तदाधारमेव चास्य संस्कृतपरीक्षासु नैकत्र मूर्द्धन्यभावेन समावेशनं कृतम्।

अत्र युगे, यत्र संस्कृताध्ययनं तृतीयकोटिगणनीयच्छात्रमात्रविधेयभावमापद्य विपद्यते, विवेचनापद्धतिनिबद्धसंस्कृतग्रन्थचयो मृन्मय इवोपहस्यते, एतादृशग्रन्थरत्नस्य कियानादरः परिशीलनं वा स्यादिति स्वयमनुमातुमीशते सुधियः।

अस्यामपि स्थितौ प्रवाहपतितत्वेन, अज्ञानेन, दिग्भ्रमेण, पूर्वजन्मकृतसुकृतपरिपाकवशेन वाऽद्यापि छात्रा अत्र ग्रन्थे परीक्षां दातुमध्यवस्यन्ति, येषां जीविका च्छात्रोत्तीर्णतामात्रावलम्बना तेऽध्यापकाश्च तानुत्तितारयिषन्ति, परन्तु ग्रन्थकाठिन्येन बुद्धिपथातिथित्वमानी तस्यापि विषयस्य लेशाऽवसंचार-

क्षमत्वानयनविधेर्दुष्करत्वेन च च्छात्राणामुत्तीर्णता हस्तनक्षत्रखञ्जनायत इति हि भूतार्थव्याहृतिः ।

छात्राणां काठिन्यमिदमपसारयितुं सुरगवीसमुद्धरणप्रवणैर्वाराणसेय-चौखम्बा संस्कृतपुस्तकालयाधिपतिमहाभागैरनुरुद्धा मुजफ्फरपुरस्थधर्मसमाज-संस्कृतमहाविद्यालयसाहित्यप्राध्यापकाः प्रख्यातपाण्डित्यप्रकर्षाश्च पण्डित-श्रीमदनमोहनझाशर्ममहानुभावा महता श्रमेणास्य ग्रन्थस्योत्प्रेक्षालक्षणान्तं भागमालोड्य तत्प्रश्नोत्तरमालागुम्फनेन च्छात्रानुपचिकीर्षवः पुस्तकमिदं छात्रविद्वत्समुदयायोपहरन्ति ।

अत्र सरलया पद्धत्या स्वोहितप्रश्नानामुत्तराणि वाराणसेयपरीक्षास्वागतानं विहारपरीक्षापृष्टानां च प्रश्नानां विधिवत्समाधानानि च लिखितानि सन्ति । एतेषां पण्डितवराणां श्रमेण बहूनां श्रमो निरस्त इति धन्यवादभाजनमिद-मीयोऽयं प्रयासः । आशासेऽस्य लघुकायस्यापि पुस्तकस्याश्रयणेन च्छात्राणां कृते परीक्षाजलनिधिः पल्वलायेत ।

शमिति ।

मुजफ्फरपुरम्
वि० सं० २०१०

विदुषामाश्रयः—
—रामचन्द्रमिश्रः

॥ श्रीः ॥

# रसगङ्गाधर-रहस्यम्

## ( रसगंगाधर–प्रश्नोत्तरी )



### अथ प्रथमाननम्

श्यामा सा शिव-वामा जलधर-धामा मदन्तरे लसतात् ।
यत्र समद-शिव-नेत्र-द्युतिरचिरद्युतेः सम्पदं तनुते ॥ १ ॥

विदुषामपि दुर्बोधो रसगङ्गाधरोऽस्ति चेत् ।
कथा का तत्र बालानां कोमलाल्पधियां पुनः ॥ २ ॥

अतस्तस्य दुरूहस्य ग्रन्थस्येयं विधीयते ।
'प्रश्नोत्तरी'[1] परीक्षाब्धि–तारणे तरुणी तरी ॥ ३ ॥

सुधियो मां विनिन्देयुः कृतिमेनां निरीक्ष्य ते ।
चक्षुष्मन्तोऽपि पश्यन्ति ये न साम्प्रतिकं युगम् ॥ ४ ॥

यत्नस्तु यान् समुद्दिश्य जायते तेन यदि ।
यत्नेन प्रीतिमायान्ति यत्नकर्त्ता कृती तदा ॥ ५ ॥

**१—प्रश्नः—सावतरणं पण्डितराजाभिमतं काव्यलक्षणमुल्लिख्य तद्-घटकान् पदार्थान् परिष्कुरुत ?**

**उत्तरम्**—'करोति कुतुकेन काव्यमीमांसाम्' इत्यादिना काव्यनिरूपणं प्रतिज्ञातं ग्रंथकृता, काव्यनिरूपणञ्च काव्यविषयकज्ञानानुकूलशब्दप्रयोगः काव्यज्ञानञ्च गुणालंकारादिप्रकारकं काव्यविशेष्यकम् 'काव्यं गुणादिमत्' इत्याकारकं प्रकृतोपयोगि, तत्र च ज्ञाने काव्यत्वरूपविशेष्यतावच्छेदकज्ञानं प्रथमावश्यकम्, एवमेव

१. 'अपि लोकभाषापदं ग्राह्यम्' इत्यनुशासनानुसारं प्रयुक्तोऽयं शब्दः ।

तत्तत्पदार्थेषु मिथो भेदसिद्धिः प्रवृत्तिनिवृत्त्युपयोगिता सनपेक्षिता भवति अतः काव्येऽपि तदितरभेदसिद्धिरावश्यकी, सा च 'काव्यं स्वेतरस्माद् भिन्नम्' इत्यनुमित्यैव सम्भवति तस्यामनुमितौ काव्यत्वमेव हेतुतामवगाहितुं क्रमते इति मनस्याधाय पण्डितराजः काव्यत्वं निर्वक्ति—

'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इति ।

रमणीयाः = लोकोत्तराह्लादजनकभावनाविषयाः, ये अर्थाः = वाच्यलक्ष्यव्यङ्ग्यरूपाः, तत्प्रतिपादकः = तद्विषयकबोधजनकः, शब्दः = सुप्तिङन्तरूपः काव्यमित्यर्थः । अस्मिन् लक्षणे कटाक्षादिवारणाय 'शब्द' पदम् व्यङ्ग्यादिसंग्रहाय 'प्रतिपादक' वाच्य-लक्ष्य व्यङ्ग्यात्मकत्रिविधार्थसंग्रहाय वाचकः लक्षकः, व्यञ्जक इति वाऽनुक्त्वा प्रतिपादक इत्युक्तम् पदम्, रमणीयशब्दप्रतिपादके व्याकरणादौ अतिव्याप्तिनिरासाय 'अर्थ' पदम्, 'घटमानय' इत्यादिवाक्यव्यावृतये 'रमणीय' पदमिति बोध्यम् । ननु किन्नामाह्लादे लोकोत्तरत्वम् ? इति चेत् वहुषु आह्लादेषु 'लोकोत्तरः, लोकोतरः' इत्यनुगतप्रीतीतिसिद्धः चमत्कारत्वापरपर्यायो जातिविशेष एवेति मन्तव्यम् ।

**२–प्रश्नः–'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इति लक्षणस्य कानि पर्यवसितस्वरूपाणि पण्डितराजेनोक्तानि ? तत्रोत्तरोत्तरस्वरूपसमुल्लेखे किं रहस्यम् ? सर्वं साधु समालोचयत ।**

**उत्तरम्**–चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्दम् यत्प्रतिपादितार्थविषयकभावानात्वं चमत्कारजनकतावच्छेदकं तत्त्वम्, स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारत्वमेव वा पर्यवसितं काव्यस्वरूपम् । एषु प्रथमलक्षणे यत्किञ्चिच्चमत्कारजनकज्ञाने समूहालम्बनविधया भासमानान्यर्थप्रतिपादकशब्दे काव्यत्वापत्तिवारणाय ज्ञानेत्यपहाय भावनेत्युक्तम् । यत्र यत् किञ्चिच्चमत्कारजनकं ज्ञानं यदा यदा जायते तदा तदा समूहालम्बनविधया अन्योऽर्थो भासते एव, तत्र तादृशार्थप्रतिपादकवाक्ये भावनापदनिवेशेनापि दुरुद्धरेवातिव्याप्तिरित्यरुचेराह—यत्प्रतिपादितेति द्वितीयं लक्षणम् । यत् तत्पदघटितत्वेनानुगततया काव्यपदशक्यतावच्छेदकस्य गुरुशरीरतया गौरवेण च तृतीयलक्षणावतार इति लक्षणत्रयोल्लेखे रहस्यं वेदितव्यम् । संसर्गमुद्रयाऽप-

रार्थमनुगमय्य चमत्कारवत्त्वमात्रस्य लक्षणत्वेन नाननुगमो न वा गौरवमिति सारांशः।

**३–प्रश्नः–चमत्कारशब्दस्यार्थं निरूप्य पण्डितराजोक्तस्य काव्यलक्षणस्यान्योक्तलक्षणवैलक्षण्यं ग्रन्थोक्तदिशा प्रतिपाद्य तस्य शब्दगतत्वमर्थगतत्वमुभयगतत्वं वेति निर्णीयताम्।**

**उत्तरम्**–चमत्कारो नाम विच्छित्तिविशेषः, लोकोत्तराह्लाद इति यावत् अत एव 'लोकोत्तरत्वञ्च चमत्कारत्वापरपर्याय आह्लादगतो जातिविशेषः' इति जगन्नाथोक्तिः समीभवति। यद्यपि 'आलोकादावर्थान्तरेऽपि चमत्कारपदं प्रयुञ्जते पण्डितास्तथापि नासौ प्रकृतेऽभिमतो विवक्षितो वा।

चिरपरम्परावाहिनि काव्यसंसारे विविधा आलङ्कारिका विविधं काव्यलक्षणमकार्षुः। तेषु कियन्ति लक्षणानि शब्दमात्रगतानि, कियन्ति च शब्दार्थोभयगतानि। तत्र शब्दमात्रगतानि प्रायः अष्टौ तानि यथा १—इष्टार्थव्यवच्छिन्ना पदावलिः काव्यमिति दण्डी। २–एवमेव कान्तिचन्द्रोऽपि। ३–काव्यं रसादिमद् वाक्यं—श्रुतं सुखविशेषकृत् इति शौद्धोदनिः। ४—केशवमिश्रोऽप्ययमेव। ५—निर्दोषं गुणवत् काव्यमलंकारैलंकृतम्। रसात्मकं कविः कुर्वन् कीर्तिं प्रीतिञ्च विन्दति॥ इति भोजः। ६–वाक्यं रसात्मकं काव्यम्, इति विश्वनाथः। ७—निर्दोषा लक्षणवती सरीतिर्गुणगुम्फिता। सालंकाररसानेकवृत्तिर्वाक् काव्यनामभाक्॥ इति जयदेवः। ८–'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इति जगन्नाथः। शब्दार्थोभयगतानि लक्षणानि प्रायः षोडश, तानि यथा—'शब्दार्थौ सहितौ काव्यम्' इति चिरन्तना अलंकारप्रजापतयः १–भामहः, २–उद्भटः, ३–रुद्रटः, ४–आनन्दवर्धनः। काव्यशब्दोऽयं गुणालंकारसंस्कृतयोः शब्दार्थयोर्वर्तते' इति ५–वामनः। शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि। बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि' इति ६–कुन्तकः। तददोषौ शब्दार्थौ सगुणावनलङ्कृती' इति ७–मम्मटः। एवमेव ८–हेमचन्द्रः। साधुशब्दार्थसन्दर्भगुणालंकारभूषितम्। स्फुटरीतिरसोपेतं काव्यं कुर्वीत कीर्तये॥ इति ९-वाग्भटः। एवमेवापरोवाग्भटः। १०–'शब्दार्थवपुस्तावत् काव्यम्' इति ११–विद्याधरः। 'गुणालंकारसहितौ शब्दार्थौ दोषवर्जितौ। गद्यपद्योभयमयं काव्यं काव्यविदो विदुः' इति १२—विद्यानाथः।' 'तत्र निर्दोषशब्दार्थगुणत्वे सति स्फुटम्, 'गद्यादिबन्धरूपत्वं

काव्यसामान्यलक्षणम्' इति १३–अच्युतरायः । सगुणालंकृती काव्यं पदार्थौ दोषवर्जितौ' इति १४—धर्मसूरिः । काव्यं विशिष्टशब्दार्थसाहित्यसदलंकृति इति १५–क्षेमेन्द्रः । 'गुणालंकारसंयुक्तौ शब्दार्थौ रसभावगौ । नित्यदोषविनिर्मुक्तौ काव्यमित्यभिधीयते' इति १६–न्यायवागीशः । एवञ्च शब्दार्थोभयगतकाव्य-लक्षणापेक्षया शब्दमात्रगतत्वम् पण्डितराजलक्षणे प्रथमं वैलक्षण्यम् । रसगुणा-लंकारदोषभावादिनिवेशाभावश्चापरं वैलक्षण्यम् । शब्दमात्र गतलक्षणवादि-नामपि बहवो गुणालंकारसद्भावं दोषाभावञ्चावश्यमभिमन्यन्ते काव्ये । पण्डित-राजश्च तथा नाभिमन्यत इति वैलक्षण्यं स्पष्टमेव । गुणालंकारादिस्थितिनैयत्य-मस्वीकुर्वतोऽपि विश्वनाथस्य मते रसतत्त्वमावश्यकमेव काव्ये पण्डितराजमते तदपि न नान्तरीयकम् । दण्डिनो लक्षणं यद्यपि पण्डितराजलक्षणसंवादि, तथापि 'पदावल्याः काव्यत्वं समर्थयन्नसौ प्रायः एकस्य पदस्य काव्यत्वं निरस्यति जगन्नाथस्तु सति सम्भवे तत्रापि काव्यत्वमिच्छतो'ति निरवद्यं हृद्यञ्च रसगङ्गा-धरोक्तं काव्यलक्षणं सर्वविलक्षणमेवेति मन्ये, अथ पण्डितराजाभिमतं काव्य-लक्षणं शब्दगतमर्थगतमुभयगतं वेति प्रश्नो नाधिकं मूल्यमर्हति तल्लक्षणस्य शब्दमात्रगतत्वेन व्यवस्थापितपूर्वत्वात् । वस्तुतस्तु शब्दमात्रगतानि यानि लक्ष-णानि स्वीकृतानि तेष्वपि विशेषणकोटावर्थः प्रविष्ट एवेति न तेषामपि लक्षणानां शब्दमात्रगतत्वम् । एवञ्चैकविशिष्टापरस्य युगलस्य वा काव्यत्वमित्यत्र विवादविषयस्तत्र दण्ड्यादयः एकविशिष्टापरस्य ( अर्थविशिष्टस्य शब्दस्य ) काव्यत्वमिच्छन्ति, भामहादयस्तु युगलस्य ( शब्दार्थद्वयस्य ) तत्त्वमभिप्रयन्ति । एकविशिष्टापरस्य काव्यत्वे विनिगमकाभावात् अर्थविशिष्टस्य शब्दस्येव शब्द-विशिष्टस्यार्थस्यापि काव्यत्वमकामेनाप्यङ्गीकरणीयम् । तथा च गुरुशरीरस्य धर्मद्वयस्य काव्यपदशक्यतावच्छेदकत्वं भवेदिति गौरवम्, तदपेक्षया युगलस्य काव्यत्वे लघुशरीरस्य धर्मद्वयस्य तत्वे लाघवमित्यपि बहवः । अर्थमात्रगतं काव्यलक्षणं तु प्रायः केऽपि नाङ्गीकुर्वन्ति ।

**४–प्रश्नः—मम्मटोक्तं काव्यलक्षणं जगन्नाथदर्शितदिशा खण्डयत स्वप्रति-भया मण्डयत वा ।**

**उत्तरम्**—'अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यम्' इति मम्मटोक्तं लक्षणं न समीचीनम् शब्दार्थयुगलस्य काव्यशब्दवाच्यत्वे मानाभावात् ।

'काव्यमुच्चैः पठ्यते' इत्यादिव्यवहारतः शब्दविशेषस्यैव काव्यपदार्थत्वसिद्धेः कविकर्मतायाः शब्द एव सम्भवाच्च, काव्यत्वस्य शब्दार्थयोर्व्यासक्तत्वे 'एको न द्वौ' इति वत् 'श्लोकवाक्यं न काव्यम्' इति व्यवहारस्यापत्तेश्च प्रत्येकपर्याप्तत्वे एकस्मिन् पद्ये काव्यद्वयव्यहारापत्तेश्च । ननु काव्यत्वप्रयोजकस्य आस्वादोद्बोधकत्वस्य शब्देऽर्थे चाविशिष्टतया द्वयोरेव काव्यत्वमुचितमिति चेन्न रागस्यापि रसव्यञ्जकतया काव्यत्वापत्तेः, एवञ्च वेदपुराणलक्षणस्येव काव्यलक्षणस्यापि शब्दनिष्ठत्वमेव समुचितमिति भावः । काव्यलक्षणे गुणालंकारादिनिवेशोऽपि मम्मटाभिमतो न युक्तः दूत्यभिसारिकाविरहिण्यादिसमुदीरिते अभिसरणविधितन्निषेधजीवनधारणासंभवत्वव्यञ्जके 'उदितं मण्डलं विधोः' इति काव्ये 'गतोऽस्तमर्कः' इत्यादौ च अव्याप्त्यापत्तेः, गुणालंकारादीनामननुगमेन तद्घटितलक्षणस्याप्यननुगतत्वप्रसङ्गाच्च । दोषाभावोऽपि काव्यलक्षणेन निवेशयोग्यः 'दुष्टं काव्यमिति व्यवहारस्यासंगतेः, न च संयोगाभाववान् वृक्षः संयोगीतिवद् अंशभेदेन दोषरहितं दुष्टमिति व्यवहारे बाधकं नास्तीति वक्तव्यम् 'मूले' महीरुहो विहङ्गमसंयोगी न शाखायामिति प्रतीत्या संयोगस्याव्याप्यवृत्तित्वेऽपि' इदं पद्यं पूर्वार्धे काव्यमुत्तरार्धे न काव्यमिति प्रतीतेरभावेन काव्यत्वस्याप्यवृत्तित्वायोगात् ।

मम्मटलक्षणमण्डनप्रकारश्चेत्थमवगन्तव्यः मम्मटेन अनुपहसनीयकाव्यस्यैव लक्षणं कृतम्, तच्चोपयुक्तम्, यतः काव्यं नाम वक्तुर्हार्दभावप्रतिबिम्बरूपम्, हृद्गता एव भावा रमणीयतया काव्येषूपनिबध्यन्ते । प्रत्यक्षदृष्टा अपि भावा न तथा वैचित्र्यं जनयन्ति यथा त एव सुकविवाग्विषयतां गताः, उक्तञ्च-'कविशक्त्यर्पिता भावास्तन्मयीभावयुक्तितः । यथा स्फुरन्त्यमी काव्यान्न तथाऽध्यक्षतः किल ॥' इति । अतः काव्ये विभावादिस्थितिरावश्यकी । एवञ्च हार्दभावानां विभावादीनां वर्णनमेव काव्यम् । यदुक्तम् 'अनुभावविभावानां वर्णना काव्यमुच्यते' इति । अतः कवयते 'वर्णयति' इति व्युत्पत्तिलब्धस्य वर्णनात्मकस्य कविकर्मणः सङ्गतिः शब्दार्थयोः काव्यत्व एवानुकूलशब्दस्तु तदुपायभूतः । कविप्रौढोक्तितन्निबद्धप्रौढोक्तिभ्यां कल्पितत्वस्यापि अर्थ एव सम्भवः, काव्यं बुद्धमिति व्यवहारश्चार्थस्यैव काव्यत्वसाधकः । 'काव्यमुच्चैः पठ्यते' इत्यादिव्यवहारः शब्दमात्रे लक्षणया अर्थस्यापि शब्दद्वारा प्रतीतिविषयत्वेन वा सूप-

पाद.। तस्मात् शब्दार्थयुगलस्य काव्यत्वं सुस्थम् । तत्र शब्दयोजनावैचित्र्ये शब्दः काव्यम् । अर्थवैचित्र्येऽर्थः, उभयवैचित्र्ये द्वयमपि । ननु काव्यत्वं व्यासज्यवृत्ति, योजनारूपस्य तस्य व्यासज्यवृत्तित्वायोगात् । अत एव न श्लोकवाक्यं काव्यमिति व्यवहारस्यापत्तिः। एकस्मिन् पद्ये काव्यद्वयव्यवहारापत्तिरपि न, विजातीयैकचमत्कृतिजनकत्वेन एकत्वस्यैव व्यवहारात् । सहकारित्वं तु उभयत्रापि उभयोः । वेदादिलक्षणमपि शब्दार्थोभयनिष्ठमेव । अत एव तदधीते तद्वेद' इति सूत्रस्थो भगवान् पतंजलिः सङ्गच्छते । दोषाभावगुणालंकारादीनां काव्योत्कर्षप्रयोजकतायाः सर्वसम्मतत्वेन अनुपहसनीयकाव्यलक्षणे तन्निवेशो न दोषावहः । सामान्यलक्षणं तु तन्मतेऽपि अदोषादिपदाघटितमेवेति सुधियो विभावयन्तु ।

**५—प्रश्नः—विश्वनाथकृत काव्यलक्षणं काभिरुपपत्तिभिर्निराकृतं पण्डितराजेन ?**

**उत्तरम्**—'वाक्यं रसात्मकं काव्यम्' इति विश्वनाथकृतं काव्यलक्षणं न सम्यक् वस्त्वलंकारप्रधानानां काव्यानामकाव्यत्वापातात् । इष्टापत्तिस्तु न शक्यते कर्तुम्, महाकविसम्प्रदायस्य व्याकुलीभावात् । तथाहि—कविभिर्जलप्रवाहवेगनिपतनोत्पतनभ्रमणानि, कपिबालादिविलसितानि चोपवर्णितानि, यत्राचेतनतया चित्तवृत्तिविशेषात्मको रसो न सम्भवति, एवञ्चाव्याप्तं तत्र विश्वनाथाभिमतं लक्षणमिति भावः । ननु अचेतनवृत्तान्तवर्णनेऽपि चेतनवृत्तान्तयोजनया कथञ्चित् रसस्पर्शोऽस्ति इति चेन्मैवम्, अर्थमात्रस्य विभावानुभावव्यभिचार्य्यन्यतमत्वेन ईदृशरसस्पर्शस्य 'गौश्चलति' 'मृगो धावति' इत्यादावपि सत्त्वेनाप्रयोजकत्वात् ।

**६—प्रश्नः—शब्दार्थयुगलस्य काव्यत्वनिराकरणाय कास्का युक्तयः पण्डितराजेन प्रदर्शिताः ?**

**उत्तरम्**—अस्य प्रश्नस्योत्तरं चतुर्थप्रश्नोत्तरेण गतार्थम् ।

**७—प्रश्नः—पण्डितराजोक्तदिशा प्राचीनोक्तं काव्यलक्षणं निरस्य सयुक्तिकं रसगङ्गाधरोक्तं लक्षणं समर्थ्यताम् ।**

**उत्तरम्**—प्रश्नस्यास्य समाधानं प्रथम–चतुर्थ–पञ्चमप्रश्नसमाधानेष्वन्तर्भूतम् ।

**८—प्रश्नः—शब्दः, अर्थः, उभयं वा काव्यमिति रुचिरं समालोच्य सिद्धान्तसरण्या तत्स्वरूप-परिष्कारप्रकारं साहङ्कारं निर्दुष्टमुट्टङ्कयत ।**

उत्तरम्—चतुर्थप्रश्नस्योत्तरेणैव समाहितोऽयं प्रश्नः ।

**९—प्रश्नः—काव्यकारणताविषये कीदृशो मतभेदो 'मम्मट-पण्डितराजयोः, इति सोपपत्तिकं निरूपयत ।**

**उत्तरम्**—प्रतिभापरपर्याया शक्तिः, लोकशास्त्रज्ञानजन्यव्युत्पत्तिः, काव्यज्ञशिक्षापूर्वकाभ्यासः इति एतत्त्रितयमपि काव्यत्वावच्छिन्नम्प्रति कारणमङ्गीकुरुते मम्मटः, पण्डितराजस्तु 'काव्यघटनानुकूलशब्दार्थोपस्थितिरूपां केवलां कविगतप्रतिभामेव काव्यकारणमाह । प्रतिभाम्प्रति च—कुत्रचित् देवताप्रसादेन महापुरुषाशीर्वादेन वा जनितमदृष्टम्, क्वचिच्च विलक्षणव्युत्पत्तिकाव्यकरणाभ्यासौ हेतुत्वेन स्वीकुरुते । प्रतिभाम्प्रति अदृष्टव्युत्पत्त्यभ्यासानां मिलितानां हेतुत्वन्नेति सारांशः, बालादेर्व्युत्पत्त्यभ्यासौ विनापि महापुरुषप्रसादमात्रात् प्रतिभोत्पत्तिदर्शनात्, 'बालोऽहं जगदानन्दे'इत्यादि पद्यं पंचवर्षदेशीयस्य बालस्य प्रसिद्धमेव । ननु तत्रापि जन्मान्तरीयव्युत्पत्त्यभ्यासयोः कल्पनं सम्भवतीति चेन्न गौरवान्मानाभावात्कार्यस्यान्यथाप्युपपत्तेश्च । नचास्तु प्रतिभाम्प्रति अदृष्टमेव केवलं हेतुः, क्तं व्युत्पत्त्यभ्यासयोः कारणत्वेन इति वाच्यम्, कियत्कालं यावत् काव्यकरणासमर्थस्यापि पश्चात् केनापि प्रकारेण व्युत्पत्त्यभ्याससम्पत्तौ प्रतिभाप्रादुर्भावात् । तत्रापि स्वीकृतेऽदृष्टे ताभ्यां प्रागपि तस्याः प्रसक्तेः । प्राक्प्रतिभोत्पत्तिप्रतिबन्धकादृष्टान्तरकल्पनं तु गौरवपराहतमेव, तादृशानेकस्थलगतादृष्टद्वयकल्पनापेक्षया प्रतिबन्धकादृष्टनाशकतया क्लृप्तव्युत्पत्त्यभ्यासयोरेव प्रतिभाहेतुत्वकल्पने लाघवं स्पष्टमेव । प्रतिभात्वं च काव्यकारणतावच्छेदकतया सिद्धो जातिविशेषः; नीलघटत्वादिवत् सखण्डौपाधिर्वा, इति रुचिरं पण्डितराजमतं मम्मटमतापेक्षयेति दिक् ।

**१०—प्रश्नः—काव्यं प्रतिभात्वेन, प्रतिभां प्रति अदृष्टत्वेन व्युत्पत्त्यभ्यासत्वेन च कारणत्वे कुतः न व्यभिचारः ?**

**उत्तरम्**—विलक्षणप्रतिभां प्रत्यदृष्टस्य विलक्षणप्रतिभां प्रति व्युत्पत्त्यभ्यासयोः कारणत्वमभिमतम्, विलक्षणकाव्यं प्रति विलक्षणप्रतिभाया हेतुत्वमिष्टम्, अर्थात् प्रतिभागतं वैलक्षण्यं प्रथमकार्यकारणभावे कार्यतावच्छेदकम्, द्वितीये च कार्य-

कारणभावे कारणतावच्छेदकमिति न क्वापि व्यभिचारशङ्कावसर इति बोध्यम्। अथवा सर्वत्र कार्यतावच्छेदककुक्षौ तत्तत्कारणाव्यवहितोत्तरत्वं निवेशनीयम्, तेनापि व्यभिचारवारणं सम्भवति । ननु यत्र मनोरपि व्युत्पत्त्यभ्यासयोर्न प्रतिभोत्पादस्तत्रान्वयव्यभिचारो दुर्वार इति चेन्न, तत्र तयोस्तादृशवैलक्षण्ये प्रमाणाभावेन कारणतावच्छेदकानवच्छिन्नत्वात् । पापविशेषस्य प्रतिबन्धकत्वकल्पनाद् वा । प्रतिबन्धकाभावस्य कार्यमात्रं प्रति कारणता सर्वाभिमतैव ।

**११—प्रश्नः—काव्यस्य कति भेदाः ? के च ते ? कानि च तेषां लक्षणानीति सर्वं पण्डितराजोक्तदिशा सम्यगुपपादनीयम् ।**

**उत्तरम्**—काव्यं चतुर्धा, उत्तमोत्तममध्यमाधमभेदात् । तल्लक्षणानि यथा—

( १ ) 'शब्दार्थौ यत्र गुणीभावितात्मानौ कमप्यर्थमभिव्यंक्तस्तदुत्तमोत्तमं काव्यम्' ।

( २ ) 'यत्र व्यङ्ग्यमप्रधानमेव सच्चमत्कारणं तदुत्तमम् ।

( ३ ) 'यत्र व्यङ्ग्यचमत्कारासमानाधिकरणो वाच्यचमत्कारस्तन्मध्यमं काव्यम्' ।

( ४ ) 'यत्रार्थचमत्कृत्युपस्कृता शब्दचमत्कृतिः प्रधानं तदधमं काव्यम्' ।

उदाहरणानि यथा—

शयिता सविधेऽप्यनीश्वरा सफलीकर्तुमहो मनोरथान् ।
दयिता दयिताननाम्बुजं, दरमीलन्नयना निरीक्षते ॥'
इत्युत्तमोतमस्य ।

'राघवविरहज्वालासंतापितसह्यशैलशिखरेषु ।
शिशिरे सुखं सयानाः कपयः कुप्यन्ति पवनतनयाय ॥ इत्युत्तमस्य ।

'तनयमैनाकगवेषणलम्बीकृतजलधिजठरप्रविष्टहिमगिरिभुजायमानाया भगवत्या भागीरथ्याः सखी' इति मध्यमस्य ।

मित्रात्रिपुत्रनेत्राय त्रयीशात्रयशत्रवे ।
गोत्रारिगोत्रजत्राय गोत्रात्रे ते नमो नमः ॥' इत्यधमस्य ।

**१२—प्रश्नः—पण्डितराजोक्ते उत्तमोत्तमकाव्योदाहरणे 'शयिता सविधे'**

**इत्यत्र नायिकानिष्ठायाश्चुम्बनेच्छाया लज्जाया वा कुतो न प्राधान्येन व्यङ्ग्यत्वम् ?**

**उत्तरम्**—'शयिता सविधे' इत्यालम्बनस्य नायकस्य, सविधशयनाक्षिप्तस्य 'रहः स्थानादेरुद्दीपनस्य च विभावस्य, तादृष्टशनिरीक्षणादेरनुभावस्य त्रपौत्सुक्यादेर्व्यभिचारिणश्च संयोगाद् रतिरभिव्यज्यते । ननु 'यद्ययं शयितः स्यात् तदाऽस्याननाम्बुजं चुम्बेयमिति नायिकेच्छाया एव कुतो न व्यङ्ग्यतेति चेन्न, मनोरथपदेन तादृशेच्छाया वाच्यतया व्यङ्ग्यत्वायोगात् । न च मनोरथत्वाकारेण तस्यावाच्यत्वेऽपि चुम्बनविषयकेच्छात्वेन व्यङ्ग्यत्वे न किमपि बाधकमिति शङ्क्यम्, चमत्काराप्रतीतेरेव बाधकत्वात्, वाच्यवृत्यानालिङ्गितस्यैव व्यङ्ग्यस्य चमत्कारित्वात् । रतेरव्यंजने चुम्बनेच्छायां तदनुभावताया अप्रतीत्या अचमत्कारित्वाच्च ।

अथ त्रपैवास्तु प्रधानव्यङ्ग्येत्यपि न सचेतसामन्तस्तोषकरम्, 'दरमीलन्नयने'त्यनेनोद्देश्यतावच्छेदकतयैव प्रत्याय्यते त्रपा, तथा च तत्र मुख्यवाक्यार्थत्वासम्भवात् । नच दरमीलन्नयनात्वविशिष्टनिरीक्षणस्य विधेयतास्वीकारे नोद्देश्यतावच्छेदकत्वं त्रपाया इति वाच्यम्, नयनगतदरमीलनस्य त्रपाकार्यत्वेऽपि तादृशनिरीक्षणस्य रतिमात्रकार्यत्वेन रतिव्यंजनावश्यकत्वात्, त्रपाया मुख्यव्यङ्ग्यत्वे निरीक्षणोक्तेरनावश्यकत्वात् । वाच्यकोटौ रतेरनुभाव निरीक्षणं प्रति त्रपाया अनुभावो दरमीलनं यथा गुणीभूतम् तथैव व्यङ्ग्यकोटावपि रतिं प्रति त्रपाया अपि गुणीभाव एवोचित इति भावः ।

**११—प्रश्नः—'निःशेषच्युतचन्दनम्' इति पद्यं दीक्षितोक्तदिशा व्याख्याय तत्र पण्डितराजकृतानाक्षेपान् सिद्धान्तप्रदर्शनपुरस्सरं प्रदर्शयत ।**

**उत्तरम्**—पद्यमिदं सर्वे ध्वनेरुदाहरणमामनन्ति । परन्तु केचनाभिधामूलध्वनेः केचन लक्षणामूलध्वनेः तत्र दीक्षितमम्मटपण्डितराजा अभिधामूलध्वनिं स्वीकुर्वन्ति, विश्वनाथश्च लक्षणामूलध्वनिम् । अभिधामूलध्वनिवादिनां मते तदन्तिकं रन्तुं गतासीति व्यङ्ग्यस्वरूपम्, लक्षणामूलध्वनिवादिनां मते तु रन्तुमेतावानेव व्यङ्ग्याकारस्तदन्तिकगमनस्य विपरीतलक्षणाया लक्ष्यत्वात् ।

तत्राभिधामूलध्वनिमङ्गीकुर्वतोऽपि दीक्षितस्य तदुपपादनप्रकारो न पण्डितराजाभिमतः । यतो दीक्षितः कथयति—नायकेऽधमत्वं द्विधा सम्भवति जन्मना

कर्मणा वा, तत्र जन्मनाऽधमत्वं नोत्तमनायिका नायकस्य वक्ति, नापि स्वापराधपर्यवसायिदूतीसम्भोगाद्यतिरिक्तेन कर्मणा । सम्भवन्नपि तादृशः कश्चिन्नायककृतापराधो नायिकया सोढ एव अन्यथा दूतीसम्प्रेषणानुपपत्तेः इति स नोद्घाटनार्होऽधमपदप्रयोगहेतुर्वा अतः प्रधानतयाऽधमपदेनोक्तोऽर्थो व्यज्यते । अपरविशेषणवाक्यार्थश्च तत्र साहाय्यमाचरन्ति । तद् यथा—'उत्तरीयकर्षणेन सम्भवन्त्याश्चन्दनच्युतेः परिहाराय निःशेषपदम्, स्नानसाधारण्यवारणाय तटपदम्, ताम्बूल, ग्रहणविलम्बात्सम्भवतः प्राचीनरागमृष्टत्वस्य निरासाय रागस्य निःशेषमृष्टतोक्तिः, स्नानव्यावृतये अधर इति विशिष्य ग्रहणम् । एवञ्च सम्भोग एव सम्भवन्तस्ते ते विशेषणवाक्यार्थाः प्रधानव्यङ्ग्यव्यंजने सहायका भवन्तीति । पण्डितराजस्तु तेषां व्याख्यां सहते यतोऽसौ ब्रूते—यदि सा नायिका विदग्धोत्तमा तदा कथं स्वमुखेन सखीसमक्षे नायकस्य तत्सम्भोगं स्पष्टम् प्रतिपादयेत्, वैदग्ध्यभङ्गापत्तेः । एवं यदि सम्भोगमात्रसम्भवो विशेषणवाक्यार्थः स्यात् तर्हि तादृशस्य वाक्यार्थस्यासाधारण्येन व्याप्तिरूपतयाऽनुमानेनैव व्यङ्ग्यबोधसम्भवे व्यंजनाया एव खण्डननापतेत् इत्यहो मूलोच्छेदो पाण्डित्यप्रकर्षः । अथ सलिलार्द्रवसनकरणकप्रोञ्छनादिनाऽपि तत्सम्भवात् तटादिपदघटितत्वेऽपि न निःशेषेत्यादिवाक्यार्थानामसाधारण्यमिति चेन्न वापीस्नानव्यावर्तनस्य विफलत्वात् एकत्रानैकान्तिकत्वस्येव बहुष्वनैकान्तिकताया अपि ज्ञाताया अनुमितिप्रतिकूलत्वात् व्यक्त्यप्रतिकूलत्वाच्च । अपि च दीक्षितरीत्या विशेषणवाक्यार्थानां वापीस्नाने बाधात् 'गता न गता' इति पदाभ्यां विपरीतलक्षणयैव तदन्तिकगमनस्य बोधे पूर्वोक्तव्यङ्ग्यशरीरसम्पत्त्यसम्भवः एवञ्च युक्तिविरुद्धं दीक्षितकृतं व्याख्यानम्, प्राचीनग्रन्थविरुद्धञ्च, मम्मटादिभिः 'भम धम्मिअ, ओण्णिद्म्' इत्यादौ साधारणानामेवार्थानां व्यंजकत्वाङ्गीकारात् । किञ्च दीक्षितमते व्यङ्ग्यस्य वाच्यार्थोपपादकतया गुणीभूतत्वप्रसङ्ग अतः विदग्धनायिकानिरूपितवाक्यार्थानां वाच्यार्थसाधारण्यमेव युक्तम् । तथाहि 'अयि ! बान्धवजस्तयाज्ञातपीडागमे ! स्वार्थपरायणे ! स्नानकालातिक्रमभयवशेन नदीमदीयप्रिययोरन्तिकमगत्वैव वापी स्नातुमितो मदन्तिकाद् गतासि न पुनस्तस्य परवेदनानभिज्ञतया दुःखदातृत्वेनाधमस्यान्तिकम् । यतो निःशेषच्युतचन्दनं स्तनयोस्तटमेव नीरःस्थलम्, वापीगतबहुलयुवजनत्रपापारवश्यात् अंशद्वयलग्नाग्रस्वस्तिकीकृतभुजलतायुगलेन तटस्यैवोन्नततया

मुहुरामर्शात् । एवं त्वरया सम्यगक्षालनेनोत्तरोष्ठो न निर्मृष्टरागोऽधरस्तु तदपेक्षया गण्डूषजलरदनशोधाङ्गुल्यादीनामधिकं सम्मर्दमावहतीति तथा । एवं साधारणेषु वाक्यार्थेषु मुख्यार्थबाधाभावात् न लक्षणाप्रसङ्गः वाच्यार्थबोधानन्तरं वक्तृबोद्धव्यादीनां वैशिष्ट्यस्य प्रतीतौ अधमपदेन स्वप्रवृत्तिप्रयोजको दुःखदातृत्वरूपो धर्मः वाच्यार्थदशायां साधारणात्मा अपराधान्तरनिमित्तकदुःखदातृत्वेन स्थितो व्यञ्जनया दूतीसम्भोगनिमित्तकदुःखदातृत्वाकारेण पर्यवस्यतीति सिद्धान्तो वेदनीयः ।

**१४—प्रश्नः—उत्तमोत्तमयोः काव्ययोर्लक्षणे निखिलविशेषणव्यवच्छेद्यप्रदर्शनपुरस्सरं निरूपयन्तु ।**

**उत्तरम्**—लक्षणेऽनयोरेकादशप्रश्नसमाधानप्रसंगे समुल्लिखिते । अवशिष्टप्रश्नांशस्य समाधानमिह लिख्यते—उत्तमोत्तमकाव्यलक्षणे 'रमणीयत्वर्थविशेषणेन चमत्कृतिभूमिरर्थो विवक्षितः । तेनातिगूढस्फुटव्यङ्ग्ययोर्निरासः, तयोरचमत्कारित्वाङ्गीकारात् । 'गुणीभावितात्मानौ' इति विशेषणं व्यंजकशब्दार्थापेक्षया व्यङ्ग्यस्य प्राधान्यबोधकम्, तेन अपराङ्गवाच्यसिद्ध्यंगव्यंग्यस्य चमत्कारित्वेऽपि नोत्तमोत्तमत्वम्, तत्र व्यंग्यस्य प्राधान्यविरहात् । उत्तमकाव्यलक्षणेऽवधारणार्थक एवकारनिवेशः वाच्यापेक्षया प्राधानीभूतं व्यंग्यान्तरमादाय गुणीभूतं व्यंग्यमादाय प्रसक्ताया अतिव्याप्तेर्वारणार्थः । तेन 'अयं स रसनोत्कर्षी' इत्यादौ वाच्यापेक्षया प्रधानं करुणापेक्षया गौणं शृंगारमादाय नोत्तमत्वमपि तु करुणमादाय ध्वनित्वमेव । चमत्कारणमित्यनेन लीनव्यंग्यवाच्यचित्रयोर्व्यावृत्तिः ।

**१५—प्रश्नः—रसगङ्गाधरोक्तं द्वितीयं काव्यभेदं सोदाहरणं निर्दिश्य तस्य गुणीभूतव्यङ्ग्यत्वं निराकृत्य तृतीयभेदात् तस्य वैलक्षण्यं स्फुटमुपपाद्यताम् ।**

**उत्तरम्**—एतत्प्रश्नोत्तरणीये उत्तमकाव्यस्य लक्षणोदाहरणे एकादशप्रश्नोत्तरे लिखिते । अवशिष्टांशस्योत्तर यथा—अस्य भेदस्य गुणीभूतव्यंग्यत्वं नाशङ्कनीयम्, तत्रत्यं व्यङ्ग्यं चमत्कारकं न तिष्ठति अत्रत्यं पुनर्व्यङ्ग्यमतिचमत्कारकरमित्युभयोर्भेदात् । तृतीयभेदे वाच्यचमत्कार एव व्यङ्ग्यचमत्कारापेक्षया स्पष्ट उत्कृष्टश्च भवति, द्वितीयभेदे तु व्यङ्ग्यचमत्कार एव वाच्यचमत्कारमपेक्ष्य सहृदयहृदयहारीति तयोर्वैलक्षण्यमवगन्तव्यम् ।

**१६—प्रश्नः—'प्रहरविरतौ' इत्यादौ गुणीभूतव्यङ्ग्यत्वं समर्थयतो 'दीक्षितस्य' मतं कथमपाकृतं पण्डितराजेनेति सम्यग् विवेचयन्तु ।**

**उत्तरम्**—'प्रहरविरतौ' वित्यत्र 'सकलमहः परमावधिस्ततः परं प्राणान् धारयितुं न समर्थेति व्यङ्ग्यं प्रियगमननिवारणरूपवाच्यसिद्ध्यङ्गमतो गुणीभूतव्यङ्ग्यमिति दीक्षितेनोक्तं न विचारसहम्, सवाष्पगलज्जलानां प्रहरविरतावित्याद्यालापानामेव प्रियगमननिवारणरूपवाच्यसिद्ध्यङ्गतयाऽव्यङ्ग्यस्य गुणीभावाभावात् । आलापैरिति तृतीयया प्रकृत्यर्थस्य हरणक्रियाकरणतायाः स्फुटं प्रतिपत्तेः । व्यंग्यस्यापि वाच्यसिद्ध्यंगतासम्भवमात्रेण तथोक्तिर्नोचिता, 'निःशेषे'त्यादावपि व्यंग्यस्य दूतीसम्भोगस्य अधमत्वरूपवाच्यसिद्ध्यंगतासम्भवेन गुणीभावापत्तेः । तस्य व्यंग्यस्य गुणीभावांगीकारेऽपि व्यज्यमानेन विप्रलम्भेन ध्वनित्वं नियतमेव ।

**१७—प्रश्नः—पण्डितराजः कथमधमाधमं पंचमं काव्यमाशङ्क्य निराकरोदिति सयुक्तिमुपन्यसनीयम् ।**

**उत्तरम्**—यथा अर्थचमत्कारसंवलितशब्दचमत्कारप्राधान्येऽधमं चतुर्थं काव्यमङ्गीक्रियते तथैवार्थचमत्कृतिसामान्यशून्यशब्दचमत्कृतिसत्त्वे पञ्चममधमाधमं नाम कुतो न स्वीक्रियते काव्यमिति चेन्न, रमणीयार्थप्रतिपादकशब्दतारूपकाव्यसामान्यलक्षणानाक्रान्ततया काव्यत्वाभावात् । यद्यपि एकाक्षरपद्यार्धावृत्तियमकपद्मबन्धादिकं तादृशकाव्योदाहरणं महाकविप्रबन्धेष्वपि लभ्यते तथापि वस्तुस्थितेरेवानुरोधो विधेयो नैतिह्यस्येति मार्मिकाः स्वयमेवावगन्तुमर्हन्ति ।

**१८—प्रश्नः—सर्वे त्रिविधमेव काव्यमङ्गीकुर्वन्ति, पण्डितराजस्तु, चतुर्विधम्, तत्र का वाचोयुक्तिः ? कश्चाभिनवो भेदः ? सर्वमविकलमुपपादयन्तु ।**

**उत्तरम्**—उत्तममध्यमाधमभेदेन त्रिविधमेव काव्यमालक्षते प्राञ्चस्तन्न युक्तम्, अर्थचित्रशब्दचित्रयोरविशेषेणाधमत्वस्य वक्तुमशक्यत्वात् तारतम्यस्य स्फुटमुपलब्धेः 'विनिर्गतं मानदमात्ममन्दिरात्', 'सच्छिन्नमूलः क्षतजेन रेणुः' इत्यादिभिरर्थचित्रैः सह 'स्वच्छन्दोच्छलदच्छ' इत्यादि पामरश्लाघ्यानां शब्दचित्राणामविशेषं को नाम सचेता वक्तुमीष्टे । तारतम्योपलम्भेपि यद्येकभेदत्वं तर्हि ध्वनिगुणीभूतव्यंग्ययोरीषदन्तरयोर्विभिन्नभेदत्वे न शोभनो

दुराग्रहः। अतः जगन्नाथोक्ताश्चत्वारो भेदाः समुचिता एव काव्यस्येति विदाङ्कुर्वन्तु विद्वांसः। भेदस्त्वभिनवो द्वितीय एव तस्यैव पण्डितराजीयकल्पनामुलकत्वात्।

**१९–प्रश्नः–अभिनवगुप्ताभिमतस्य रसस्वरूपस्य जगन्नाथोपपादनप्रकारो दर्शनीयः।**

**उत्तरम्**–सहृदया यदा तत्तद्रसोचितललितविन्यासबन्धुराणि काव्यान्याकर्णयन्ति नाटकानि वा तथाविधानि पश्यन्ति तदा तत्रोपवर्णितास्तेषां स्थायिभावानां कारणकार्यसहकारिणः ज्ञानद्वारा सहृदयहृदयं प्रविशन्ति। तत्प्रविष्टानाञ्च तेषां दुष्यन्तत्वादिका धर्मा व्यक्तिविशेषवर्तिनः सहृदयतासहकृतेन भावनामहिम्ना अपोह्यन्ते। ततश्च ते विभावानुभावव्यभिचारिशब्दव्यपदेशं लभन्ते, लब्धतयाव्यपदेशैश्च तैर्निलित्वा अलौकिको व्यंजनाव्यापारः प्रादुर्भाव्यते। प्रादुर्भूतेन च व्यंजनाव्यापारेण प्रमातुरात्मानन्दस्यावरकमज्ञानं दूरीक्रियते। अत एव च प्रमातुः परिमितप्रमातृत्वादिनिजधर्मा अपि प्रमृष्टा भवन्ति। तथाभूतेन च प्रमात्रा स्वात्मानन्देन साकमनुभूयमानः पूर्वतः संस्काररूपेण स्थितो रत्यादिः स्थायिभावो रसः। अयं भावः यथा शरावपिहितो दीपः पिधाननिवृतौ सन्निहितान् घटपटादिपदार्थान् प्रकाशयति स्वञ्च प्रकाशते तथैव व्यञ्जनया दूरीकृताज्ञानावरणमात्मचैतन्यं विभावादिसंवलितान् स्वयं प्रकाशमानं सत् प्रकाशयति। व्यञ्जकविभावादिचर्वणाया आवरणभंगस्य वा उत्पत्तिविनाशाभ्यां रसेऽपि तयोरुपचारः। विभावादिचर्वणाया निवृत्तौ तदवधिकारणभङ्गस्यापि निवृत्त्या पुनः प्रकाश आवृतो भवति अत एव तस्यामवस्थायां विद्यमानोऽपि स्थायी न प्रकाशते। एवञ्चाभिनवगुप्तमते 'रसो वै सः' इति श्रुतिस्वारस्येन रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रसः। विशिष्टात्मकेऽस्मिन् रसे चिदंशमादाय नित्यत्वं स्वप्रकाशत्वञ्च। रत्याद्यंशमादायत्वनित्यत्वमितरभास्यत्वञ्च सिद्धयति। रसचर्वणा च चिद्गतावरणभङ्ग एव। रसे सुखांशभाने हृदयानुभवः पूर्वोक्तश्रुतिश्च प्रमाणम्।

२०—**प्रश्नः—'आत्मचैतन्यं विभावादिसंवलितरत्यादीन् प्रकाशयति अन्तःकरणधर्माणां साक्षिभास्यत्वाभ्युपगतेः, विभावादीनामपि स्वप्नतुर-**

**गादीनामिव रङ्गरजतादीनामिव वा साक्षिभास्यत्वमविरुद्धम्' अस्याः पङ्क्तेराशयः स्फुटमुपपाद्यताम् ।**

**उत्तरम्**—वेदान्तिनां मते आत्मातिरिक्तं न किमपि सत् । प्रतीयमाना घट-पटादिवाह्यपदार्था वृत्तिरूपास्ताँश्चान्तःकरणसंयोगेनात्मा प्रकाशयति । अन्तः-करणधर्मास्तु साक्षादात्मैव भासयति, तत्रान्तःकरणसंयोगो नापेक्षितो भवति । इति वस्तुस्थितिः । एवञ्च व्यंजनावृत्तिबलोन्मूलिताज्ञानावरणमात्मचैतन्य-विभावादिसंवलितरत्यादीनन्तःकरणधर्मान् भासयति । अतस्ते साक्षिणा = आत्मना भास्या उच्यन्ते । ननु वासनारूपतयाऽन्तःकरणधर्माणां रत्यादीनां साक्षिभास्य-त्वमस्तु विभावादीनां शकुन्तलादिभौतिकपदार्थानां साक्षिभास्यत्वं न सम्भवतीति चेन्न । स्वप्ने तुरगादीनां जाग्रदवस्थायामपि रंगे रजतादीनां च केवलकाल्पनिक-त्वाद्यथा साक्षिभास्यत्वम्, तथा भावनामयानां विभावादीनामपि साक्षिभास्यत्वे विरोधाभावात् ।

२१—**प्रश्नः—'यद्वा विभावादिचर्वणामहिम्ना तत्तत्स्थाय्युपहितस्व-स्वरूपानन्दाकारा चित्तवृत्तिरुपजायते' इत्यादिना कल्पान्तरोत्थापने बीज-मुपन्यस्य आनन्दोऽयं न लौकिकसुखान्तरसाधारणः, अनन्तःकरणवृत्ति-रूपत्वात् इति पंक्तिः समालोच्यताम् ।**

**उत्तरम्**—पूर्वस्मिन् कल्पे विभावादिभिर्व्यञ्जनाऽऽविर्भावः, आविर्भूतया तया अज्ञानरूपावरणभंगः, तत आनन्दमयरसप्रकाश इति क्रमः । यद्वेत्येनेनोत्थापिते कल्पान्तरे तु सहृदयतोन्मिषितेन व्यञ्जनासहकृतेन । विभावादिचर्वणामहिम्ना तत्तत्स्थाय्युपहितस्वरूपानन्दाकारा चित्तवृत्तिरुपजायते सा चित्तवृत्तिरेव रसः । अस्मिन् कल्पे आवरणभंगस्य कल्पना न कर्तव्या भवतीति तदकल्पनप्रयुक्त-लाघवमेव कल्पान्तरोत्थापनबीजमवसेयम् । ईदृशचित्तवृत्तिसृष्टौ दृष्टान्तविधया सविकल्पकसमाध्यवस्थस्य योगिनश्चित्तवृत्तिरुपादीयते ग्रन्थकृता । न चैवम् तस्या-श्चित्तवृत्तेर्लौकिकत्वाद्रसत्वमयुक्तमिति वाच्यम्, अन्येषां सुखानामन्तःकरणवृत्त्यव-च्छिन्नचैतन्यरूपत्वेन लौकिकत्वेऽपि रसरूपायाश्चित्तवृत्तेर्निरवच्छिन्नविषयकत्वेना-लौकिकत्वात् ।

२२—**प्रश्नः—'अभिधा भावना चैव तद्भोगीकृतिरेव वा' इत्येतद् वचन-समर्थनीयं रससम्बन्धिमतमुपपत्तिभिरुपपादयन्तु ।**

**उत्तरम्**—नायके धराधौरेयत्वादेरात्मनि चाधुनिकत्वकापुरुषत्वादेर्वैधर्म्यस्य निश्चये असम्भवन्त्याः स्वात्मनि दुष्यन्ताद्यभेदबुद्धेः प्रतिबन्धकत्वस्य वक्तुमावश्यकतया स्वस्रादेर्विभावनापत्तिवारणाय शृंगाररसविभावतावच्छेदककुक्षौ अवश्यं निवेशनीयस्य विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकाप्रामाण्यनिश्चयानालिङ्गितागम्यात्वप्रकारकज्ञानाभावस्यासत्त्वेन सामाजिकरतिनिरूपिततादृशज्ञानविरहविशिष्टकान्तात्वरूपविभावतावच्छेदकस्य शकुन्तलादावभावेन 'शकुन्तलाविषयकरतिमान् अहम्' इत्याकारक आत्मगतत्वेन रसप्रत्ययो दुर्घटः। 'शकुन्तलाविषयकरतिमान् दुष्यन्तः' इत्याकारकः प्रत्ययस्तु तटस्थतया नास्वाद्यः। अपि च कीदृशोऽत्र रसप्रत्ययोऽभिप्रेतः? शाब्दः? मानसः? स्मृतिरूपो वा? नाद्यः, शब्दान्तरजन्यनायकमिथुनवृत्तान्तज्ञानस्येव काव्यशब्दजन्यज्ञानस्याप्यचमत्कारित्वात्। न द्वितीयः, चिन्तोपनीततत्पदार्थविषयकमानसप्रत्ययापेक्षया तत्पदार्थालम्बनकरसात्मकप्रत्यये वैलक्षण्यदर्शनात्। न तृतीयः, तथा प्रागननुभवात्। एवञ्च कथं कीदृशी च रसप्रतीतिरिति जिज्ञासायां भट्टनायकः कथयति—त्रयोंऽशाः काव्यस्य अभिधा, भावकत्वं, भोगकृत्वञ्च, प्रथमेनाभिधाव्यापारेण निवेद्यन्ते काव्यपदार्थाः। द्वितीयेन भावकत्वव्यापारेण त एव पदार्थाः साधारणीक्रियन्ते। येनागम्यात्वादिरसविरोधिज्ञानानि प्रतिबध्यन्ते। कान्तात्वादिरसानुकूलधर्मपुरस्कारेणावस्थाप्यन्ते च ते पदार्थाः। अथ तृतीयेन व्यापारेण रजस्तमसोर्निगीर्णयोरुद्रिक्तसत्त्वजनितनिजचित्स्वभावविश्रान्तिलक्षणसाक्षात्कारेण विषयीकृतो भावनोपनीतः साधारणात्मा रत्यादिरेव रसः इति। अत्र मते भोगकृत्वं व्यक्तेर्नातिरिच्यते। भावकत्वव्यापारान्तरस्वीकारो गौरवावहः कर्तव्यो भवतीति बोध्यम्।

**१३—प्रश्नः—किं तावत् पण्डितराजमते रसस्वरूपं निर्दिष्टं? प्रस्तावेऽस्मिन् कति मतानि निरूपितानि? तेषु केषु केषु महर्षिसूत्रसम्मतिः? सूत्रार्थश्च तत्तन्मतपरतया कस्कः? इत्येतत्सर्वं विशदं निगद्य रसस्वरूपे 'रसो वै सः' इति सूत्रसम्मतिं ददतो जगन्नाथस्याभिप्रायः प्रकाश्यताम्।**

**उत्तरम्**—काव्यनाट्ययोः, कविनटाभ्यां विभावादिषु प्रकाशितेषु व्यंजनया 'शकुन्तलाविषयकरतिमान् दुष्यन्तः' इति ज्ञाने वृत्ते सहृदयताजन्मनो भावनाविशेषरूपदोषस्य महिम्ना कल्पितदुष्यन्तत्वाच्छादितेऽज्ञानमये स्वात्मनि शुक्तिखण्डे रजतखण्ड इवोत्पद्यमानः सदसद्भ्यामनिर्वचनीयः साक्षिभास्यशकुन्तला

विषयकरत्यादिरेव रसः। रसोऽयमस्मिन् मते न नित्यः 'अपि तु दोषविशेषजन्यः नाशोऽप्यस्य दोषनाशाधीनः। ननु कथमीदृशे रसे सुखात्मकतेति चेन्न, स्वोत्तरभाविलोकोत्तरानन्देन सह भेदज्ञानाभावेन सुखपदव्यपदेशात्। न च नास्य रसस्य व्यंग्यता वर्णनीयता च सम्भवतः, 'अथ व्यंग्यो रसः' इत्यादिव्यवहारोऽनुपपन्न इति वाच्यम्, स्वपूर्वोपस्थितनायकनिष्ठशकुन्तलाविषयकरतेर्व्यञ्जनया तद्रतित्वेनैकत्वाध्यवसानात् सामाजिकगतरत्यादेरपि व्यंग्यत्वव्यवहारात्। करुणरसादिषु स्थायिनः शोकादेर्दुःखजनकतया प्रसिद्धस्य नायक इव सहृदयेऽपि दुःखजनकत्वमेव स्यात् न सुखजनकत्वमिति चेत्, इष्टापत्तिरेव। दुःखमेव तत्तद्रसेषु सहृदयैरनुभूयते इति भावः। यद्याह्लाद एवानुभवसिद्ध इत्याग्रहस्तदाह्लादप्रयोजकत्वमिव दुःखप्रतिबन्धकत्वमपि अलौकिककाव्यव्यापारस्यैव कल्पनीयम्, कारणस्य कल्पनात्।

रस प्रस्तावे पण्डितराजेनैकादशमतानि प्रतिपादितानि। तेषु अष्टौ मतानि महर्षिसूत्रसम्मतानि। 'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिरि'ति महर्षिसूत्रम्। अस्यार्थः—विभावादिभिः संयोगात् = व्यञ्जनात् रसस्य निष्पत्तिः = स्वरूपेण प्रकाशनमित्याद्ये। विभावादीनां सम्यक् साधारणात्मतया योगात् भावकत्वव्यापारेण भावनात् रसस्य निष्पत्तिः भोगाख्येन साक्षात्कारेण विषयीकृतिरिति द्वितीये। विभावादीनां संयोगात् भावनाविशेषरूपदोषात् रसस्य निष्पत्तिरुपपत्तिरिति तृतीये। विभावादीनां संयोगात् ज्ञानात् रसस्य उत्पत्तिरिति चतुर्थे। विभावादीनां सम्बन्धाद्रसस्यारोप इति पञ्चमे। विभावादिभिरनुमानात् रसस्यानुमिति षष्ठे। विभावादीनां समुदायात् रसपदव्यवहार इति सप्तमे। विभावादिषु चमत्कारादित्यष्टमे।

अभिनवगुप्ताभिमतरसनिरूपणप्रसंगे 'रसो वै सः' इति श्रुतिमुल्लिलेख जगन्नाथः। अभिनवगुप्तश्च रसमात्मानन्दस्वरूपमाह तत्प्रमापणाय प्रोक्तश्रुतिचर्चामुचिता। यतः सा श्रुतिः रसस्यते आस्वाद्यते इति व्युत्पत्तियोगात् ब्रह्मणआनन्दमयता ख्यापयति। एवञ्चानन्दरूपयो रसब्रह्मणोरैक्यं स्वाभाविकमिति सारांशः।

**२४—प्रश्नः—पण्डितराजाभिमतं रसस्वरूपं निरूप्य शकुन्तलादीनां**

**शकुन्तलात्वेन कान्तात्वेन वा विभावताङ्गीकारे किं दूषणमिति प्रदर्श्य किं विभावतावच्छेदकं निर्दुष्टमिति निरूपयन्तु ।**

**उत्तरम्**—अत्रोल्लेख्यं रसस्वरूपं त्रयोविंशतितम (२३) प्रश्नस्योत्तरे लिखितम् । अवशिष्टांशस्य समाधानमिह लिख्यते—

शकुन्तलादीनां शकुन्तलात्वादिना विभावता नोचिता तथात्वे तद्विषयकरतेरात्मगतत्वेन प्रतीत्यनापत्तेः, तासां परकीयात्वेन मातृवत् पूज्यतया तद्विषयकरतेरात्मनि भाने व्रीडातङ्कादिसम्भवात् । कान्तात्वेनापि तासां विभावता न सम्भवति स्वस्रादेरपि कान्तात्वेन तत्त्वापत्तेः । अतः विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकाप्रामाण्यनिश्चयानालिङ्गितागम्यात्वप्रकारकज्ञानविरहविशिष्टकान्तात्वं विभावतावच्छेदकं निर्दुष्टमिति बोध्यम् ।

**२५—प्रश्नः—नव्यनयप्रवाहितां रसधारां सप्रपञ्चमालोच्य किमियं पण्डितराजीयाऽन्यदीया वेति युक्तिप्रयुक्तिभिः ससंरम्भमभिधत्त ।**

**उत्तरम्**—नव्यनयप्रवाहिता रसधारा त्रयोविंशतितम (२३) प्रश्नसमाधाने सप्रञ्चमालोचिता । तस्याः पण्डितराजीयत्वे साधकयुक्तीनामुल्लेखः परमवशिष्यते । सोऽत्र केवलं विधीयते 'नव्यास्तु' इति प्रतीकमुपादाय किञ्चितं मतमेव पण्डितराजस्येति सूक्ष्मेक्षिकया पर्यालोचने स्फुटं प्रतिभासते । यतः प्रथमतोपपादनावसरे 'इत्थञ्चाभिनवगुप्तमम्मटादिग्रन्थस्वारस्येन भग्नावरणचिद्विशिष्टरत्यादिरेव रसः' इत्युल्लिखन् जगन्नाथः स्पष्टमेव तन्मतस्य स्वकीयत्वं निरस्यति । किं च 'यदपि विभावादीनां साधारण्यं प्राचीनैरुक्तं तदपि शकुन्तलादिशब्दैः शकुन्तलात्वादिप्रकारकबोधजनकैः प्रतिपाद्यमानेषु शकुन्तलादिषु दोषविशेषकल्पनं विना दुरुपपादम् । अतोऽवश्यकल्प्ये 'दोषविशेषे तेनैव दुष्यन्ताद्यभेदबुद्धिरपि सूपपादा' इत्यादिना **प्रथममते** गौरवागूरणमपि कृतं पण्डितराजेन । द्वितीयं मतं भट्टनायकस्याभिनवभावकत्वव्यापारकल्पनाप्रयुक्तगौरवपराहतञ्चेति स्पष्टमेवोल्लिखितम्, अतो न तन्मतं कथमपि पण्डितराजसम्मतं भवितुमर्हति । चतुर्थमपि मतं न तदीयत्वेनोत्प्रेक्षितुं शक्यम्, तत्र व्यञ्जनाया अस्वीकारात्, पण्डितराजेन बहुशो व्यञ्जनायाः समर्थनात्, 'विशेषणज्ञानार्थमनुमानमभ्युपेयमि'ति तन्मतान्ते समुल्लेखेनास्वारस्य सूचनाच्च । अपराणि च मतानि स्वल्पतमप्रतिपादनानि वैदूष्यानावहानि चेति कथमपि ग्रन्थकारस्य पण्डित-

राजस्य न भवितुमर्हन्तीति परिशेषात् तृतीयं मतं पर्यवसितं जगन्नाथस्येति दिक् ।

२६—**प्रश्नः—रससम्बन्धे पण्डितराजोक्तानामेकादशमतानां मध्ये कतिषु मतेषु 'विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्तिः' इति भरतसूत्रं संघटते इति संघटनरीतिप्रदर्शनपुरस्सरं निरूपणीयम ।**

**उत्तरम्**—अस्य प्रश्नस्य समाधानं त्रयोविंशतितम ( २३ ) प्रश्नसमाधानेन गतार्थमिति तत एवावगन्तव्यम् ।

२७—**प्रश्नः—'एतैश्च स्वात्मनि दुष्यन्तत्वधर्मितावच्छेदकशकुन्तलादिविषयकरतिवैशिष्ट्यावगाही, स्वात्मत्वविशिष्टे शकुन्तलादिविषयकरतिविशिष्टदुष्यन्ततादात्म्यावगाही, स्वात्मत्वविशिष्टे दुष्यन्तत्वशकुन्तलाविषयकरत्योर्वैशिष्ट्यावगाही वा त्रिविधोऽपि बोधो रसपदार्थतयाऽभ्युपेयः' इत्युक्तं पण्डितराजेन, अत्र बोधत्रयस्य परिष्कृतं स्वरूपमुल्लिख्य परस्परवैलक्षण्यं प्रदर्शयन्तु ।**

**उत्तरम्**—'दुष्यन्तत्वावच्छिन्नविशेष्यतानिरूपितप्रकारताश्रयीभूतशकुन्तलाविषयकरतिविशिष्टोऽहम्' इति प्रथमबोधस्वरूपम्, अत्रास्मदर्थमुद्दिश्य तादृशरतिवैशिष्ट्यं विधीयते, 'शकुन्तलाविषयकरतित्वावच्छिन्नप्रकारतानिरूपितविशेष्यताश्रयीभूतदुष्यन्ततादात्म्यवान् अहम्' इति बोधकारो द्वितीयः । अत्रास्मदर्थमुद्दिश्य दुष्यन्ततादात्म्यं विधीयते । अहं दुष्यन्तत्ववान्, शकुन्तलाविषयकरतिमाँश्च' तृतीयबोधाकारः समुच्चयात्मकः । अत्र अस्मदर्थमुद्दिश्य दुष्यन्तत्वं शकुन्तलाविषयकरतिश्च विधीयेते; इति बोधत्रयस्य स्वरूपं परस्परवैलक्षण्यञ्च स्पष्टमेवागच्छन्तु सुधियः ।

२८—**प्रश्नः—'शान्तस्य शमसाध्यत्वान्नटे च तदसम्भवात्, अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते' इत्युक्तिः पण्डितराजसरणिमनुसृत्य समालोच्यताम् ।**

**उत्तरम्**—नटे शमाभावात् शमसाध्यः शान्तरसो नाट्ये न सम्भवतीति केचिदाचक्षते; तदापातरमणीयम्, नटे रसाभिव्यक्तेरस्वीकारात् सामाजिकानां शमवत्त्वेन तत्र रसोद्बोधे बाधकविरहाच्च । नटे वास्तवक्रोधादेरभावेन वास्तवक्रोधकार्याणां वधबन्धादीनामुत्पत्त्यसंभवेऽपि कृत्रिमतत्कार्याणां शिक्षाभ्यासादि

उत्पत्तिवद् नटस्य शमाभावेऽपि कृत्रिमशमाभिनयः सम्भवतीति भावः। गीतवाद्यादीनां शमविरोधिनां नाट्ये वर्तमानत्वे सामाजिकेषु विषयवैमुख्यात्मनः शान्तस्योद्रेको न भवितुमर्हतीति न वक्तव्यम्, नाट्ये शान्तरसमभ्युपगच्छद्भिः फलबलेन गीतवाद्यादेः शान्ते विरोधितायां अकल्पनात्। विषयचिन्तासामान्यस्य शान्ते विरोधित्वोक्तिर्न युक्ता तदीयालम्बनस्य संसारानित्यत्वस्य तदुद्दीपनस्य पुराणश्रवणसत्संगपुण्यवनतीर्थावलोकनादेरपि विषयत्वेन विरोधित्वापत्तेः अत एव संगीतरत्नाकरे उक्तम्—

अष्टावेव रसा नाट्येष्विति केचिदचूचुदन्।
तदचारु यतः काञ्चिन्न रसं स्वदते नटः॥ इति॥

२९—**प्रश्नः—स्थायिभावानां किमनुगतं लक्षणम्? के च ते? कथञ्च चित्तवृत्तिरूपाणां तेषां स्थायित्वम्? वासनारूपतया स्थिरत्वाङ्गीकारे व्यभिचारिषु कुतो नातिव्याप्तिः? सर्वमुपपादनीयम्।**

**उत्तरम्**—'आप्रबन्धस्थिरभावत्वम्' इत्येवानुगतं स्थायिभावलक्षणम्। यदुक्तमन्यैरपि—

सजातीयविजातीयैरतिरस्कृतमूर्तिमान्।
यावद्रसं वर्तमानः स्थायिभाव उदाहृतः॥ इति॥

**ते च**—रतिः शोकश्च निर्वेदक्रोधोत्साहाश्च विस्मयः।
हासो भयं जुगुप्सा च स्थायिभावाः क्रमादमी॥

इति कारिकासंगृहीता बोध्याः। न च चित्तवृत्तिरूपाणामेषां स्थिरत्वं दुर्लभं वासनारूपतया स्थिरत्वं तु व्यभिचारिष्वतिप्रसक्तमिति वाच्यम्, वासनारूपाणामेषां मुहुर्मुहुरभिव्यक्तेरेव स्थिरपदार्थत्वात्। व्यभिचारिणां तु न मुहुर्मुहुरभिव्यक्तिः, तदभिव्यक्तेर्विद्युदुद्योतप्रायत्वात्।

३०—**प्रश्नः—वीरस्य रसस्य कति भेदाः प्राचामभिमताः? पण्डितराजश्च कति तदधिकान् भेदानङ्गीकरुते? तदङ्गीकारे च कास्तस्य युक्तयः? सर्वं विवेचनीयम्।**

**उत्तरम्**—वीररसस्य चत्वारो भेदाः प्राचामभिमताः, दानदयायुद्धधर्मैस्तदुपाधेरुत्साहस्य चतुर्विधत्वात्। पण्डितराजस्तु सत्य-पाण्डित्य-क्षमा-बलरूपोपाधिभेदेनापरानपि वीररसस्य चतुरो भेदान् स्वीकरोति। ननु सत्यस्यापि धर्मान्तर्ग-

ततया धर्मवीर एव सत्यवीरस्याप्यन्तर्भाव इति चेन्न, दानदययोरपि तदन्तर्गततया तद्वीरयोरपि धर्मवीरात्पृथग्गणनानौचित्यात् । एवं पाण्डित्यवीरस्यापि न युद्धवीरेऽन्तःपातः, भेदाधिक्यस्य दुर्वारतया प्राचीनोक्तभेदसंख्यारक्षणाय वादसाधारणयुद्धत्वनिर्वचनप्रयासस्य वैयर्थ्यात् । ननु पाण्डित्यबलवीरयोरुदाहरणेषु गर्व एव ध्वन्यते नोत्साहः, एवं क्षमावीरोदाहरणेषु धृतिरेवेति चेन्न, युद्धवीरादिष्वपि गर्वादिध्वनितास्वीकारप्रसंगात्, तत्तद् व्यभिचारिध्वननेन रसध्वनिसामान्यस्यैवाप्युत्साहप्रतीत्या वीररसध्वनिस्वीकार आवश्यक एव । दयावीरादिषु उत्साहः प्रतीयते सत्यवीरादिषु नेति दुःसाहसमात्रं विनिगमकाभावात् ।

३१—**प्रश्नः—भक्तिरसवादिनः के ? का तत्र भवतामत्र वाचोयुक्तिः ? कीदृशोऽस्मिन् प्रत्यादेशः ? स सहृदयसंवादी नवेति सुन्दरं समुदीरयत ।**

**उत्तरम्**—माध्वसम्प्रदायानुयायिनो गौराङ्गमहाप्रभुप्रभृतयो भक्तिरसं स्वीकुर्वन्ति । तत्सम्प्रदायवादिनां भक्तिरसविवेचका ग्रन्था अपि विद्यन्ते । भक्तिरसस्वीकारे च तेषामेषा वाचोयुक्तिर्विलसति यत् कस्यापि रसस्य तत्त्वे यादृशी या या सामग्री समपेक्षिता भवति, सा सर्वा वर्ततेऽत्रापि, यथा भक्तिरसस्य भगवान् वासुदेवोऽस्त्यालम्बनम्, रोमाञ्चाश्रुपातादयोऽनुभावाः । हर्षादयः संचारिणः । भगवदनुरागरूपा भक्तिश्चात्र स्थायिभावः । एभिर्हेतुभिरभिव्यक्तो भक्तिरसो भगवद्भक्तैर्भागवतपुराणश्रवणसमये सानन्दमनुभूयते । अस्य रसस्य शान्तरसेऽन्तर्भावस्त्वसम्भवः, वैराग्यविरुद्धस्यानुरागस्येह प्राधान्यादिति । पण्डितराजस्त्वेवं प्रत्यादिशति—यद् भक्तिर्नाम भावो न रसः, 'रतिर्देवादिविषया व्यभिचारी तथाऽञ्चितः । भावः प्रोक्तस्तदाभासा ह्यनौचित्यप्रवर्तिताः' ॥ इति प्राचीनोक्तरीत्या देवादिविषयकरतेर्भावत्वात् । नन्वेवं रतित्वाविशेषेण कामिनीवियषकरतेरपि भावत्वं कुतो नेति चेन्न, भरतादिमुनिवचनानामेव रसभावत्वादिव्यवस्थापकत्वेन अन्यवचनानामप्रामाणिकत्वात्, अन्यथा पुत्रादिविषयाया अपि रतेः स्थायिभावत्वं कुतो न स्यात् ? कुतो वा जुगुप्साशोकादीनां शुद्धभावत्वं न भवेत् ? इत्थं भरतादेस्तिरस्कारे पुरस्कारे च परेषां सकलं साहित्यदर्शनमेव व्याकुलं प्रसज्येत इति यथाशास्त्रमेव ज्यायः ।

अयं पण्डितराजस्य प्रत्यादेशो न सहृदयजनमनोविरुद्धः । यतो भावो नाम

कश्चिद्रसाद् भिन्नः पदार्थोऽस्तीति प्रायः सर्वैः स्वीक्रियतेऽनुभूयते च । एवञ्च देवादिविषयकरतीतरः कोऽपि भावो भवेदत्र न. केषामपि मनांसि नाश्रितां ददतीत्यलमधिकेन ।

३२—**प्रश्नः—भगवदालम्बनस्य रोमाञ्चाश्रुपातादिभिरनुभावितस्य हर्षादिभिः परिपोषितस्य भागवतपुराणश्रवणसमये भक्तैरनुभूयमानस्य भक्तिरसस्य जागरूकत्वे कथं नवैव रसा इति ग्रन्थोक्तरीत्याविकलमुपपादयन्तु ।**

**उत्तरम्**—गतार्थोऽयं प्रश्नः, एकत्रिंशत्तमेन ( ३१ ) प्रश्नेनेति तत एवास्योत्तरमाकलनीयम् ।

३३—**प्रश्नः—कयोः कयो रसयोः परस्परं विरोधः ? कयोः कयोश्चाविरोधः ? कश्च विरोधपदार्थः ? सर्वेषां रसानामद्वितीयानन्दमयत्वेन कथं विरोधसम्भावना ? विरुद्धयोरपि रसयोः समावेशाय क उपायः ? सर्वं ग्रन्थोक्तदिशा निर्दिशन्तु ।**

**उत्तरम्**—शृङ्गारवीभत्सयोः, शृङ्गारकरुणयोः, वीरभयानकयोः शान्तरौद्रयोः, शान्तशृङ्गारयोश्च मिथो विरोधः । वीरशृङ्गारयोः, शृङ्गारहास्ययोः, वीराद्भुतयोः वीररौद्रयोः, शृङ्गाराद्भुतयोश्चाविरोधः । विरोधपदार्थश्च स्थितिविरोधज्ञानविरोधभेदेन द्विविधः । तत्र प्रथमस्तदधिकरणावृत्तितारूपः । द्वितीयश्च तद् ज्ञानप्रतिबध्यज्ञानकत्वरूपो बोध्यः । रसपदेनात्र प्रकरणे तदुपाधिः स्थायिभावो गृह्यते । अत एव विरोधसम्भावना, अन्यथा रसस्याद्वितीयानन्दमयत्वेन विरोधोऽसम्भव एव । विरुद्धयोरपि रसयो· समावेशायायं सरलोपायः—यत् अधिकरणान्तरे विरोधिनो रसस्य स्थापने स्थितिविरोधो निवर्तते । यथा नायकगतत्वेन वीररसे वर्णनीये प्रतिनायके भयानकस्य वर्णनमविरुद्धम् । सन्धिकर्तुरिवाविरोधिनो रसान्तरस्यान्तराले स्थापने ज्ञानविरोधोऽपि निवर्तते । यथा—'सुरांगनाभिराश्लिष्टा व्योम्नि वीरा विमानगाः । विलोकन्ते निजान् देहान् फेरुनारीभिरावृतान्' ॥ इत्यादौ सुरांगनामृतशरीरालम्बनयोः-शृङ्गारवीभत्सयोरन्तराले स्वर्गलाभाक्षिप्तो वीररसो निवेशितः । अन्तर्निवेशश्च तदुभयचर्वणाकालान्तर्वर्तिकालगतचर्वणाकत्वम् ।

३४—**प्रश्नः—गुणानां रसधर्मत्वं पण्डितराजोक्तदिशा निरसनीयम् ।**

**उत्तरम्**—माधुर्यादयो गुणा न रसधर्मा मानाभावात् । ननु प्रत्यक्षमेव तेषां रसधर्मत्वे प्रमाणमिति चेन्न; दाहादेः कार्यादनलगतस्योष्णस्पर्शस्य यथा पृथक्-

रसधर्मत्वे प्रमाणमिति चेन्न, दाहादेः कार्यादनलगतस्योष्णस्पर्शस्य यथा पृथक्-तयाऽनुभवस्तथा द्रुत्यादिचित्तवृत्तिभ्यो रसकार्येभ्योऽन्येषां रसगतगुणानामननुभवात्। न च 'गुणविशिष्टा रसा द्रुत्यादिहेतवः' इति कार्यकारणभावस्य सिद्धतया द्रुत्यादिकारणतावच्छेदकतया गुणानामनुमाने धर्मिग्राहकमानेन तेषां रसधर्मता सिद्धिरिति वाच्यम्, प्रादिस्विकरूपेणैव रसानां कारणत्वोपपत्तौ गुणकल्पने गौरवात्। न च द्रुतिं प्रति शृङ्गारकरुणशान्तानां प्रातिस्विकरूपेण कारणत्वे कार्यकारणभावत्रयस्य कल्पनीयतया तदपेक्षया माधुर्यवत्त्वेन तेषां कारणत्वकल्पने लाघवमिति शङ्क्यम्, मम्मटादिभिः मधुरतरादिगुणानां पृथग् द्रुततरत्वादिकार्य-तारतम्यप्रयोजकताभ्युपगमे प्रातिस्विकरूपेण कार्यकारणभावस्यावश्यं वक्तव्यतया माधुर्यवत्त्वेनातिरिक्तकारणताकल्पने गौरवात्। अपि च वेदान्तिवासनावासिता-न्तःकरणानां साहित्यिकानामात्मस्थानीयस्य रसस्य निर्गुणतया माधुर्यादीनां रसधर्मत्वमसम्भवमेव। रसोपाधिरत्यादिगुणत्वमपि माधुर्यानां न युक्तम्, प्रमाणविरहात्, सुखरूपतया रतेर्गुणत्वेन तत्र गुणान्तरस्यानौचित्याच्च।

३५—**प्रश्नः—गुणरीत्योः कश्चन सम्बन्धोऽस्ति न वा ? अस्ति चेत कीदृशः ? काव्ये गुणानां गुणत्वं किम् ? गुणानां स्वरूपे भेदे च यानि मतान्तराणि समुपलभ्यन्ते तेषां स्वरूपं निरुच्य सम्यक् समालोच्यताम्।**

**उत्तरम्**—गुणरीत्योर्व्यङ्ग्यव्यंजकभावात्मकः सम्बन्धो विद्यते। यतः पद-संघटनारूपरीत्या व्यज्यन्ते नाम गुणाः। काव्ये गुणानां गुणत्वं नाम अप्राधान्यम्, मुख्योपकारकत्वमिति यावत्, यद्यप्येतादृशमप्राधान्यमलंकाराणामप्यस्ति, तथापि नियतस्थितिसामानाधिकरण्यविशिष्टमप्राधान्यं विवक्षितम्, तच्च गुणानामेव। अलंकारस्थितिस्तु न नियतेति भावः, मम्मटभट्टादयो माधुर्यौजःप्रसादाख्यान् त्रीन् गुणानां रसमात्रधर्मान् क्रमशो द्रुतिदीप्तिविकासाख्यचित्तवृत्तिप्रयोजकान् आहुः। गुणानां रसमात्रधर्मत्वे निश्चिते 'मधुरा रचना, ओजस्वी बन्धः' इत्यादयो व्यवहारा 'आकारोऽस्य शूरः' इति व्यवहारवत् औपचारिका इति च कथयन्ति। पण्डितराजस्तु द्रुत्यादिचित्तप्रतिप्रयोजकत्वम् प्रयोजकतासम्बन्धेन दुत्यादिकमेव वाग्माधुर्यादिकमङ्गीकरोति। प्रयोजकत्वञ्चादृष्टादिविलक्षणं शब्दार्थ-रसरचनागतमेव ग्राह्यम्। एवञ्च न रसमात्रधर्मा गुणाः अपि तु शब्दार्थरस-रचना साधारणा एव। तेनेदृशस्य माधुर्यादेः शब्दार्थयोरपि सत्त्वात् 'मधुरा

रचने' त्यादिव्यवहारोपपत्तये उपचारो न कल्प्यो भवति । अतिप्राचीनास्तु 'श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥' इति दशशब्दगुणान् एतन्नामकानेव भिन्नलक्षणान् दशार्थगुणानपि स्वीचक्रुः । परन्तु मम्मटादयो न तदसहन्त, यतस्तेषु केचित् माधुर्यादिषु त्रिष्वेवान्तर्भूताः केचन दोषाभावरूपाः । केचिच्च अलंकारस्वरूपाः, अपरेवैचित्र्यमात्राकाराः क्वचित्पुनर्दोषा एव । तथाहि—श्लेषोदारताप्रसादसमाधीनामोजोव्यञ्जकघटनायामन्तर्भावः । माधुर्यस्य तद्व्यञ्जकरचनायाम् । समता सर्वथानुचितैव, प्रतिपाद्योद्भटत्वानुद्भटत्वाभ्यामेकस्मिन्नेव पद्ये मार्गभेदस्येष्टत्वात् । कान्तिसुकुमारते ग्राम्यत्वकष्टत्वदोषाभावरूपे । अर्थव्यक्तिश्च प्रसाद एव । अर्थगुणेष्वपि श्लेषओजस आद्याश्चत्वारो भेदाश्च वैचित्र्यमात्ररूपा न गुणान्तर्भावमर्हन्ति । प्रसादः, माधुर्यम्, सौकुमार्यम्, उदारता, समता, पंचम ओजसः प्रकारः अर्थव्यक्तिः, कान्तिश्च निराकरणेन स्वभावोक्त्यलंकारस्य रसध्वनिरसवदलंकारयोश्च स्वीकारेण गतार्थानि । इत्थञ्च गुणसंख्याविषये मम्मटजगन्नाथयोर्मतैक्येऽपि स्वरूपे मतभेदः स्पष्टः । तत्र पण्डितराजमतं परिष्कृतं क्षोदक्षमञ्चेति जानन्तु विपश्चितः ।

३६—**प्रश्नः—वामनोक्तदशशब्दगुणानां तावतामेवार्थगुणानाञ्च कथं कुत्रान्तर्भाव इति रसगंगाधररीत्या विवेचयन्तु ।**

**उत्तरम्**—प्रश्नोऽयं पञ्चत्रिंशतम (३५) प्रश्नेन समाहितः ।

३७—**प्रश्नः—अनौचित्येन प्रवृत्तो रसा रसाभास इति प्राचीनोक्तिनिरसनपूर्वकं 'व्यानम्राश्चलिताश्चैव स्फारिताः परमाकुलाः । पाण्डुपुत्रेषु पाञ्चाल्याः पतन्ति प्रथमा दृशः ॥' पद्येऽस्मिन् किं किं कथं व्यङ्ग्यमिति विशदं निगद्यताम् ।**

**उत्तरम्**—हेतुत्वेन हेत्वाभासत्वमिव रसत्वेन रसाभासत्वं न समानाधिकरणं निर्मलस्यैव रसत्वात् । एवञ्च 'अनौचित्येन प्रवृत्तो रसो रसाभास' इत्यत्र वदतो व्याघातः, यतो योऽनौचित्यप्रवृत्तो न स रसः, यो रसो न स अनौचित्यप्रवृत्तः । किञ्च केयं रसस्यानौचित्येन प्रवृत्तिः ? अनुचितविभावालम्बनमिति चेन्न तथा सति मुनिपत्न्यादिविषयकरत्यादेः संग्रहेऽपि बहुनायकविषयाया अनुभवनिष्ठायाश्च

रतेरसंग्रहात्, तत्र लोकानामयुक्तमिति धियोऽभावेन विभावस्यानौचित्यविरहात्। अतः 'अनुचितप्रवृत्तस्थायिकत्वमेव रसाभासत्वमिति सरलः पन्थाः।

'व्यानम्रः' इत्यत्र व्यानम्रतया धर्मात्मताप्रयोज्यं युधिष्ठिरे नभक्तित्वं, चलिततयास्थूलाकारत्वप्रयोज्यं भीमसेने सत्रासत्वं, स्फारिततया अलौकिकशौर्यश्रवणप्रयोज्यमर्जुने सहर्षत्वम्, परमाकुलतया परमसौन्दर्यप्रयोज्यं नकुलसहदेवयोरौत्सुक्यं च व्यञ्जयन्तीभिर्दृग्भिः पाञ्चाल्या बहुविषयाया रतेरभिव्यञ्जनात् रसाभास इति नव्याः। प्राचीनास्तु अपरिणेतृबहुनायकविषयत्वे रतेराभासतेत्याहुः।

३८—**प्रश्नः—अतिव्याप्त्यादिदोषप्रदर्शनपूर्वकं भावध्वनिं निरूप्य तस्य कथं न रसध्वनावन्तर्भावः कथं वा भावानां संख्यानियमः इति समाधीयताम्।**

**उत्तरम्**—विभावानुभावभिन्नत्वे सति रसाभिव्यंजकत्वं भावत्वमिति चेन्न, अर्थद्वारा शब्दस्यापि रसाभिव्यंजकत्वेन रसकाव्यवाक्येऽतिव्याप्त्यापत्तेः द्वारान्तरनिरपेक्षत्वेन व्यञ्जकत्वे विशेषितेऽपि न निस्तारः, द्वारान्तरनिरपेक्षतया रसव्यञ्जिकायां भावनायामतिव्याप्तेः, भावनाद्वारा रसाभिव्यञ्जके भावेऽव्याप्तेश्च। अतो 'विभावादिव्यज्यमानहर्षाद्यन्यतमत्वमेव भावत्वम्' इति निष्कर्षः। यदुक्तं प्राचाऽपि 'व्यभिचार्यञ्जितो भावः' इति। हर्षादीनामभिव्यक्तिश्च स्थायिभावन्यायेनेति बोध्यम्। ननु यत्र भावध्वनिस्तत्र तत्र रसोऽपि ध्वन्यते एवेति रसध्वनावेव कुतो न भावध्वनिर्गतार्थ इति चेन्मैवम्, प्राधान्येन ध्वन्यमानभावानां रसव्यञ्जकत्वास्वीकारेण तत्र रसध्वनेरप्रसंगात्। न च तत्रापि पर्यन्ते रसो व्यज्यत एवेति नेतरो रसध्वनेर्भावध्वनिरिति वाच्यम्, पर्यन्ते रसध्वनिसत्वेऽपि भावचमत्कारप्रकर्षेण भावध्वनिर्व्यपदेशौचित्यात्। न च रसं प्रति गुणीभूतस्य भावस्य ध्वनित्वमयुक्तमिति शङ्क्यम्, राजानुगतस्य विवाहप्रवृत्तभृत्यस्येव गुणीभूतभावस्यापि प्राधान्यसत्त्वेन ध्वनित्वे बाधाभावात्। ते च भावाश्चतुस्त्रिंशत्, हर्षस्मृतिव्रीडामोहधृतिशङ्काग्लानिदैन्यचिन्तामदश्रमगर्वनिद्रामतिव्याधित्राससुप्तविबोधामर्षावहित्थोग्रतोन्मादमरणवितर्कविषादौत्सुक्यावेगजडताऽऽलस्यासूयाऽपस्मारचापल्यप्रतिपक्षकृतधिक्कारादिजन्यनिर्वेदगुरुदेवनृपपुत्रादिविषयकरतिभेदात्। ननु मात्सर्योद्वेगदम्भेर्ष्याविवेकनिर्णयक्लैव्यक्षमाकुतुकोत्कण्ठविनयसंशयधाष्टर्यादीनामपि तत्र तत्र लक्ष्येषु दर्शनेन भावानामुक्तसंख्यानियमोऽसंगत इति चेन्न, उक्तेष्वेवैषामपि

अन्तर्भावेन संख्यान्तरानुपपत्तेः । कस्य कुत्रान्तर्भाव इति चेदित्थमवगन्तव्यम्—मात्सर्यस्यासूयायाम्, उद्वेगस्य त्रासे, दम्भेऽवहित्थायाः अमर्षे ईर्ष्यायाः, मतौ विवेकनिर्णययोः, दैन्ये क्लैव्यस्य, धृतौ क्षमायाः, औत्सुक्ये कुतुकोत्कण्ठयोः, लज्जायां विनयस्य, तर्के संशयस्य, चापले धाष्टर्चस्यान्तर्भावो भवति । न चैषां मिथो भेदः स्पष्ट इति कथमन्तर्भाव इति वक्तव्यम्, सूक्ष्मे भेदे सत्यपि असूयादौ मात्सर्यादेर्नान्तरीयकतया तदनतिरिक्तस्यैवाध्यवसायात् ।

३८—**प्रश्नः—भावत्वं चारुतरं सविस्तरं परिष्कृत्य, 'वागर्थाविवे' त्यत्र दीक्षितानुपहसतो रसगङ्गाधरकारस्य स्मृतिध्वनिस्तन्मञ्जुमन्दहसितमित्यत्रान्यः कुतो न विरुध्यते इति सगौरवमागूरयत ।**

**उत्तरम्**—भावत्वपरिष्कारोऽष्टत्रिंशत्तम (३८) प्रश्नसमाधाने कृतः । अवशिष्ट प्रश्नांशस्योत्तरमिह लिख्यते—'वागर्थाविवे'त्यत्र रसध्वनिर्दीक्षितोक्तो न युक्तः पार्वतीपरमेश्वरविषयककविरतेः प्राधान्येन भावध्वनेरेव सत्त्वात् । गुणीभूतस्य रसस्य ध्वनित्वा स्वीकारात् 'तन्मञ्जुमन्दे'त्यत्र तु संचारिण्याः, स्मृतेः, नायकरूपस्य विभावस्य, हन्तपदगम्यस्य हृदयवैकल्यरूपानुभावस्य च संयोगाद् विप्रलम्भरसाभिव्यक्त्या रसध्वनौ सम्भवत्यपि स्मृतेरेव पुरःस्फूर्तिवत्वाच्चमत्कारित्वाच्च प्राधान्येन तद्ध्वनित्वमेवोचितम् एवञ्च 'वागर्थे'त्यत्र दीक्षितानुपहसतो जगन्नाथस्य 'तन्मञ्जुमन्दे' त्यत्रत्यस्मृतिध्वनिर्न विरुध्यत इति बोध्यम् ।

४०—**प्रश्नः—भावस्वरूपनिरूपणे पण्डितराजोक्तान् पूर्वपक्षान् उल्लिख्य सिद्धान्तं दर्शयन्तु ।**

**उत्तरम्**—अष्टत्रिंशत्तमेन (३८) प्रश्ननेन गतार्थोऽयं प्रश्नः ।

४१—प्रश्नः—**पण्डितराजोक्ताश्चतुस्त्रिंशत् भावाः के ? तत्र तत्र लक्ष्येषु दृश्यमानानां मात्सर्योद्वेगदम्भेर्ष्यर्थाविवेकनिर्णयक्लैव्यक्षमाकुतुकोत्कण्ठाविनयसंशयधाष्टर्चादीनां सम्भवे कुत उक्तसंख्यानियमः ?**

**उत्तरम्**—अयमपि प्रश्नोऽष्टत्रिंशत्तमेन (३८) प्रश्नेनैवोत्तरितो विज्ञेयः ।

**४२—प्रश्नः—'भावशान्त्युदयसंधिशबलताध्वनयो भावध्वनय एव' इति पण्डितराजसिद्धान्ते का वाचोयुक्तिः ?**

**उत्तरम्**–भावशान्त्यादिध्वनयो भावादिध्वनय एव, भावध्वनिस्थले विद्यमान तया चर्व्यमाणस्य भावस्य तथा प्राधान्यं न तु विद्यमानत्वावस्थायाः, तथैव भावशान्त्यादिध्वनिस्थलेऽपि उत्पत्त्यवच्छिन्नत्व-विनश्यदवस्थत्व-संधीयमानत्व-परस्परसमानाधिकरणत्वैः प्रकारैश्चर्व्यमाणस्य भावस्यैव प्राधान्यात् चमत्कारस्य तत्रैव विश्रान्तेः। ननु उत्पत्तिविनाशसंधिशबलतानां तत्सम्बन्धिनां भावानां च तुल्ये चर्वणाविषयत्वे कतरस्य प्राधान्यमिति निर्धारयितुं न शक्यम् इति चेन्न, स्थितिकाले भावेषु प्राधान्यस्य क्लृप्तत्वात्, भावानां शान्त्यादिसमयेऽपि तेष्वेव शान्त्यादिप्रतियोगित्वादिभिर्व्यज्यमानेषु प्राधान्यकल्पनाया औचित्यात् किञ्च भावशान्त्यादौ भावो यदि न प्रधानम्, किन्तु तच्छान्त्यादिरेवेत्यङ्गीक्रियते, तदा यत्र भावो व्यङ्ग्यस्तदुदयादिर्वाच्यः तत्र भावादयादिध्वनित्वं न भवेत्, प्रधानस्योदयादेर्वाच्यता ध्वनिव्यपदेशानुपयोगित्वेऽप्रधानकृतव्यपदेशानुपपत्तेः, पण्डितराजमते तु उदयादेर्वाच्यत्वेऽपि उत्पत्त्यवच्छिन्नभावस्य प्रधानस्यावाच्यत्वेन भावोदयध्वनिव्यवहारो युक्ततरीभवति। न चैवं भावध्वनिभ्यो भावशान्त्यादिध्वनिषु सर्वानुभूयमानचमत्कारवैलक्षण्यानुपपत्तिरिति वाच्यम्, भावध्वनौ भावकृतचमत्कारस्यैव चर्वणा भवति भावशान्त्यादिध्वनिषु भावैः सह तत्प्रशमादिकृतचमत्कृतेरपि चर्वणा जायते इति वैलक्षण्यस्य पृथग् भावोदयादिध्वन्यनङ्गीकारेऽपि सत्वात्।

४३—**प्रश्नः—रसादिध्वनेरसंलक्ष्यक्रमत्वं नवीनप्राचीनोभयसम्मतं न वा ? असम्मतं चेत् कथमिति ? सोपपत्तिकमुपपाद्य वर्णरचनाविशेषाणां रसाभिव्यञ्जकत्वं ग्रन्थकृदभिप्रतं न वेति स्फुटीक्रियताम्।**

**उत्तरम्**—रसादिध्वनेरसंलक्ष्यक्रमत्वं यद्यपि प्राचीननवीनोभयसम्मतं तथापि तयोरेतत्सम्बन्धेऽयमस्ति मतभेदो यत् प्राचीनै रसादिध्वनेरसंलक्ष्यक्रमत्वमात्रमङ्गीक्रियते, नवीनैस्तु क्वचित् संलक्ष्यक्रमत्वमपि स्वीक्रियते। यतः प्रकरणस्य स्फुटत्वे सत्वरमवसितेषु विभावादिषु सहृदयतमेन प्रमात्रा सूक्ष्मेणैव कालेन रसादिलक्षणा व्यङ्ग्याऽवगम्यते इति तत्र हेतुहेतुमतोः स्थितोऽपि पौर्वापर्यक्रमो न सलक्ष्यते इत्येव रसादिध्वनेरसलक्ष्यक्रमत्वे हेतुः। एवञ्च यत्र विचारवेद्यं प्रकरणमुन्नेया वा विभावादयस्तत्र सामग्रीसंवलनविलम्बाधीनं चमत्कृतेरपि मान्थर्यमिति तादृशस्थले रसादिध्वनेः संलक्ष्यक्रमताऽपि दुर्वारा इष्टा च। अत एव एवंवादिनि देवर्षौ 'इत्यादौ भावध्वनिः संलक्ष्यक्रम इति ध्वन्यालोककारोक्तिः संगच्छते। **अभिनव-**

गुप्तोऽपि 'रसभावादिरर्थो ध्वन्यमान एव न वाच्यः, तथापि 'न सर्वोऽसंलक्ष्य-क्रमस्य विषयः' इत्यादिना स्थलविशेषे रसादिध्वनेः संलक्ष्यक्रमतामाह स्म ।

प्राचीनैरङ्गीकृतमपि वर्णरचना-विशेषाणां रसव्यञ्जकत्वं न रसगङ्गाधरकृता-ममिप्रेतम्, तेषां गुणाभिव्यञ्जकत्वेऽपि रसाभिव्यञ्जकत्वे प्रमाणाभावात् । गुण्य-भिव्यञ्जनं विना गुणाभिञ्जकत्वं न सम्भवतीति नियम एव मानमिति चेन्न, घ्राणरसनश्रोत्रेषु गुणभिव्यञ्जकत्वाभावेऽपि गुणाभिव्यञ्जकत्वदर्शनेन तादृशनिय-मस्यासिद्धत्वात् । इत्थञ्च यथा स्वस्वव्यञ्जकोपनीतानां गुणिनां गुणानामुदा-सीनानाञ्च परस्परोपश्लेषेणौदासीन्येन वा तत्तत्प्रमितिविषयता भवति तथैव रसानां गुणानाञ्चाभिव्यक्तिविषयतेतिपण्डितराजसरणिः साधीयसीति सुधीभिरूह्यम् ।

इति श्रीपण्डितराजजगन्नाथकृते रसगङ्गाधरे प्रथमाननस्य प्रश्नोत्तरी समाप्तम् ।

---

## अथोत्प्रेक्षालङ्कारभागः

**१—प्रश्नः—शब्दशक्तिमूलध्वनौ वादिनां विप्रतिपत्तीः साहङ्कारं प्रक-टय्य तत्रत्यं सिद्धान्ताध्वानं सावधान निभालयत ।**

**उत्तरम्**-नानार्थकशब्दस्थले एकस्यार्थस्याभिधया बोधेऽपि द्वितीयोऽर्थो व्यञ्ज-नयैव बोध्यते, तदेव च शब्दशक्तिमूलध्वनेरुदाहरणमिति प्राञ्चः । तेषामयमभि-प्रायः—सकलार्थनिरूपितसमानसंकेतवति दानार्थके शब्दे श्रुते तेषां सर्वेषामेवार्था-नामुपस्थितौ तात्पर्यसन्देह उदेति, अथ प्रकरणादिपर्यालोचनेन तात्पर्यनिर्णये तदात्मकपदज्ञानजन्या एकार्थमात्रविषयिणी पुनः पुनः पदार्थोपस्थितिर्जायते । ततस्तदर्थविषयकोऽन्वयबोधो भवति । एवञ्च 'सुरभि मांसं भक्षयतीत्यादौ शक्त्या सुगन्धितार्थोपस्थितावपि गवाद्युपस्थितेरभावात् तद्विषयकोऽन्वयबोधो न भवि-तुमर्हति, भवति चेति तदुपस्थितिर्व्यञ्जनया वाच्या । अत्र तात्पर्यनिर्णयानन्तरं जायमाना द्वितीयोपस्थितिः कुतो न नानार्थविषया ? नानार्थनिरूपितां नानाशक्ति स्वीकृत्य एकया प्राकरणिकार्थोपस्थितौ द्वितीययाऽप्राकरणिकार्थोपस्थितिः कथं नेत्यादिशङ्का न कार्या । प्रकरणादिज्ञानस्य प्रतिबन्धकत्वात् । ननु तादृशपदजन्या-प्राकरणिकार्थोपस्थितिसामान्य एव प्रकरणादिज्ञानस्य प्रतिबन्धकत्वेन व्यञ्जनयापि

कथमप्राकरणिकार्थोपस्थिरिति चेन्न, व्यक्त्यजन्योपस्थितिं प्रत्येव प्रकरणादिज्ञानस्य प्रतिबन्धकत्वकल्पनात् । व्यक्तिज्ञानस्योत्तेजकत्वेन उत्तेजकाभावविशिष्टप्रतिबन्धकज्ञानस्यैव कार्यरोधकत्वाद्वा । अथवा नानार्थकशब्दजन्यान्वयबोधे तात्पर्यनिर्णयस्य हेतुत्वेन नानार्थकशब्दात् प्रथममनेकार्थोपस्थितावपि तात्पर्यविषयस्यैवार्थस्यान्वयबोधो भवति नान्यस्य, तथा च पूर्वकल्पवत् नैकगोचरस्मरणापेक्षा, न वा तात्पर्यनिश्चयस्य प्रतिबन्धकत्वकल्पनेति विभाव्यते यदि, तदापि पूर्वप्रदर्शितनानार्थस्थले शक्त्या तात्पर्यनिर्णयसहकारेण प्राकरणिकार्थबोधे वृत्तेऽप्राकरणिकार्थबोधाय व्यञ्जनैवोपायः वैयञ्जनिकबोधे तात्पर्यज्ञानानपेक्षणात् । प्राकरणिकार्थज्ञानानन्तरं तादृशपदज्ञानस्योपरमे कथं व्यञ्जनयाऽपि अप्राकरणिकार्थबुद्धिरिति न वाच्यम्, अर्थप्रतीतौ शक्यतावच्छेदकस्येव पदस्यापि विशेषणतया भानात् प्रथमार्थबोधस्यैव पदज्ञानात्मकत्वस्वीकारात् । इत्थञ्च—

'अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम् ॥'

इति शब्दशक्तिमूलध्वनेर्लक्षणम् पर्यवस्यति । इति ।

नवीनास्तु नानार्थकशब्दस्थले शक्त्यैव प्राकरणिकाप्राकरणिकानां सर्वेषामर्थानामन्वयबोधं समर्थयन्ति, तथाहि—अन्वयबोधे एकार्थमात्रविषयकोपस्थितेरपेक्षा प्रागुक्ता न युक्ता नानार्थोपस्थितावपि प्रकरणादिज्ञानाधीनतात्पर्यमहिम्नैव विवक्षितार्थविषयकबोधोपपत्तौ तदपेक्षायां प्रमाणाभावात्, अपरार्थोपस्थापकपदज्ञानादिसामग्र्याः सत्त्वेन तदुपस्थितेरप्यौचित्याच्च । प्रकरणादिनिश्चयस्यापरार्थोपस्थितौ प्रतिबन्धकत्वं तु न वक्तुं शक्यम्, संस्कारतदुद्बोधकयोः सत्त्वे स्मृतेः प्रतिबन्धस्य क्वाप्यदृष्टत्वात् । न चैवमपि प्रकरणादिज्ञानतात्पर्येण प्राकरणिकार्थबोधे शक्त्या जाते आतात्पर्यविषयीभूताप्राकरणिकार्थबोधार्थम् व्यक्तिरेव शरणीकरणीयाऽकामेनापि सर्वैरिति वाच्यम्, नानार्थस्थले सर्वत्रैव व्यञ्जनोल्लासस्वीकारेण सर्वत्र प्राकरणिकाप्राकरणिकयोरर्थयोर्बोधेऽभ्युपगम्यमाने तात्पर्यज्ञानकारणताकल्पनस्य वैयर्थ्यात् । सार्वत्रिकातात्पर्यविषयीभूतार्थबोधे शक्तिव्यक्तिजन्यत्वप्रयुक्तभेदस्याकिंचित्करत्वात् । एवञ्च श्लेषकाव्यस्थल इव प्रकृतेऽपि शक्त्या प्रकृताप्रकृतयोरर्थयोर्बोधस्याङ्गीकारे बाधकाभाव एव ।

न च नानार्थस्थले सर्वत्र व्यञ्जनोल्लासे स्वीकृते तथा सम्भाव्येत्, परन्तु स

एव नास्ति अर्थात् क्वाचित्कोयं व्यञ्जनोल्लासः, तथा च यत्र व्यञ्जनोल्लासो न
वति तत्र शक्त्याऽप्राकरणिकार्थबोधवारणाय शक्तिजबोधे तात्पर्यनिर्णयस्य हेतुत्व
मावश्यकमिति वक्तव्यम्, व्यञ्जनोल्लासस्य क्वाचित्कत्वे कारणाभावात् । न च
श्रोतुः शक्तिविशेषो व्यक्तेरुल्लासे हेतुः स च फलबलात् चमत्कारिण्येवार्थे व्यक्ति-
मुल्लासयतीति सिद्धं व्यञ्जनोल्लासस्य क्वाचित्कत्वमिति वाच्यम्, श्रोतृशक्तिविशे-
षस्य नियन्त्रितशक्त्युल्लासकत्वेनैव सामञ्जस्ये नानार्थस्थले व्यक्तिकल्पनवैयर्थ्यात्।
न च यत्राप्रकृतोऽर्थोऽबाधितस्तत्र तस्य शक्तिवेद्यत्वसम्भवेऽपि यत्र 'जैमनीयमलं
धत्ते रसनायामयं द्विजः' इत्यादौ जुगुप्सितोऽप्रकृतोऽर्थः वह्निकरणकसेक इव बाधो-
पहतस्तत्र तस्य शक्त्या बोधो दुर्लभः, तद्वत्ताज्ञानं प्रति बाधनिश्चयस्य प्रति-
बन्धकतायाः सर्वजनसिद्धत्वाद् व्यक्तेस्तु बाधितार्थबोधकत्वं धर्मिग्राहकमानसिद्ध-
मिति व्यञ्जनावादिनां न कोऽपि दोष इति शङ्क्यम्, यत्र वाच्यार्थ एव बाधित-
स्तत्र तदन्वयोपपादनाय बाधनिश्चयप्रतिबध्यतावच्छेदककोटौ अनाहार्यत्वस्यैव
शब्दान्यत्वस्याप्यवश्यं निवेश्यत्वात् । अन्यथा प्रायः सर्वेष्वलंकारेषु वाच्यार्थान्व-
यबोधोपपत्तये व्यञ्जनाऽङ्गीकरणीया भवेत् । इत्थच नानार्थस्थलेऽप्रकृतार्थबोधो
व्यञ्जनयेति प्राचां सिद्धान्तोऽविचाररमणीय एव ।

अथ क्व शब्दशक्तिमूलध्वनेरुदाहरणमिति चेत् तन्न, यत्र योगरूढिस्थले रूढिः
ज्ञानेन योगापहरणं जायते, यथा 'अबलानां श्रियं हृत्वा वारिवाहैः सहानिशम् ।
तिष्ठन्ति चपला यत्र स कालः समुपागतः' ॥ 'इत्यत्राशक्तानां द्रव्यमपहृत्य जलवाहकैः
पुरुषैः सह पुंश्चल्यो रमन्ते' इत्यर्थान्तरं न तावदबलावारिवाहचपलाशब्दयोर्योग-
रूढ्या शक्यते बोधयितुम् मेघत्वाद्यघटितस्यैव तस्यार्थस्य प्रतीतेः इति तद्
व्यञ्जनया बोध्यते । तथा च—

योगरूढस्य शब्दस्य योगे रूढ्या नियन्त्रिते ।
धियं योगस्पृशोऽर्थस्य या सूते व्यञ्जनैव सा ॥

इत्येव शब्दशक्तिमूलध्वनेर्लक्षणं रमणीयमिति पण्डितराजस्य सिद्धान्तः ।

२—**प्रश्नः—'करतलनिर्गलदविरले'ति पद्यं कस्य ध्वनेरुदाहरणम् ? अत्रत्यव्यङ्ग्यविषये प्राचीननवीनयोः कीदृशो मतभेदः इति सिद्धान्तप्रदर्शन-पुरस्सरं सप्रपञ्चमुच्यताम् ।**

**उत्तरम्**—'करतले'त्यत्र राजप्रकरणपतिते पद्ये कर-दान-धनद-सार्वभौमशब्दानां

शक्तौ प्रकरणेन राजरूपेऽर्थे नियन्त्रितायां शब्दशक्तिमूलव्यंजनया प्रतीयमानो दिग्गजरूपोऽर्थोऽसम्बद्धो माभूदिति राजदिग्गजयोरुपमानोपमेयभावः कल्प्यते, इति शब्दशक्तिमूलोपलंकारध्वनेरुदाहरणमिति प्राचीनाः । नवीनास्तु श्लिष्टविशेषणायाँ समासोक्तौ व्यङ्ग्यस्याप्यप्रकृतव्यवहारस्य प्रकृतधर्मिण्यारोप्यमाणस्य प्रकृतोपस्कारकतया यथा गुणीभूतव्यङ्ग्यत्वं तथेहापि समुचितम् । यदि उपमाशरीरघटकस्योपमेयस्य राज्ञः सादृश्यांशेनोपस्कारेऽपि उपमाया नापराङ्गत्वम् उपमेयस्य स्वघटकत्वेनापरत्वाभावात्, यथा समासोक्तौ अप्रकृतव्यवहारेण प्रकृतथोपस्कारेऽपि न समासोक्तेरपराङ्गत्वं तस्याः प्रकृतापकृतघटितत्वात् इति तर्कः समुपस्थाप्येत तथापि समासोक्तेरिवास्यापि भेदस्य गुणीभूतव्यङ्ग्यत्वापत्तिर्दुर्वारेव । अतो नात्रोपमा व्यङ्ग्या अपि तु रूपकमेव व्यङ्ग्यमास्थेयम्, श्लेषे यथा एकपदोपात्ततया द्वयोरर्थयोरभेदो भासते तथाऽत्रापि एकपदोपात्तत्वयुक्तिसाम्यात् अभेदस्यैव व्यङ्ग्यतौचित्यात् ।

**३—प्रश्नः—पण्डितराजमतेन् ध्वनेः प्रधानभेदान् नामतो निर्दिश्य कविनिबद्धप्रौढोक्तिसिद्धव्यञ्जकार्थस्वीकारे शब्दार्थोभयशक्तिमूलध्वनेस्तिरस्कारे च कारणे ग्रन्थकृदुक्ते दर्शयन्तु ।**

**उत्तरम्—**




४—स्वतःसम्भविना वस्तुना वस्तुध्वनिः,

५—स्वतःसम्भविना वस्तुना अलंकारध्वनिः,

६—स्वतःसम्भविनाऽलंकारेण वस्तुध्वनिः,

७—स्वतःसंभविनाऽलंकारेणालंकारध्वनिः,
८—कविप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिः,
९—कविप्रौढोक्तिसिद्धेन वस्तुनाऽलंकारध्वनिः
१०—कविप्रौढोक्तिसिद्धालंकारेण वस्तुध्वनिः,
११—कविप्रौढोक्तिसिद्धालंकारेणालंकारध्वनिः,

एवं त्रयोदशभेदाः प्रधाना ध्वनेः पण्डितराजमतेनेति बोध्यम् ।

ननु कविनिबद्धप्रौढोक्तिसिद्धार्थरूपं व्यञ्जकमङ्गीकृत्यापरानपि चतुरो भेदान् अर्थशक्तिमूलध्वनेरुपपादयामासुः प्राञ्चः, इति तत्त्यागे किं बीजमिति चेन्न, कविनिबद्धप्रौढोक्तेः कविप्रौढोक्त्यन्तर्भूतत्वात्, अन्यथा कविनिबद्धनिबद्धादेरपि भेदान्तरप्रयोजकत्वापत्तेः । न च तस्यापि कविप्रौढोक्तित्वानपायात्तत्प्रयोज्य-भेदान्तर्गतत्वमेति वाच्यम्, प्रथमकविनिबद्धस्यापि, लोकोत्तरवर्णनानिपुणत्वलक्षणकवित्वानपायात् पृथक्भेदप्रयोजकतानुपपत्तेः ।

एवं शब्दार्थोभयशक्त्युद्भवोऽपि ध्वनेः प्रभेदो नाभिमतो जगन्नाथस्य ध्वनेरर्थशक्तिमूलकत्वव्यपदेशे नानार्थप्रकाशकशब्दशक्त्युल्लास्यत्वसामान्यशून्यत्वं तत्र भवितुमर्हति तादृशलक्ष्यप्राचुर्यात्, शब्दशक्तिमूलकत्वव्यपदेशे तु नार्थशक्त्युल्लास्यत्वसामान्यशून्यत्वं नियामकं स्वीकर्तुं शक्यम् तादृशलक्ष्यस्यासंभवादल्पत्वाच्च । एवञ्च 'रम्यहासाः' इत्यादौ उभयशक्त्युत्थध्वन्युदाहरणत्वेनाभिमते पद्येऽपि शब्दशक्तिमूलत्वव्यवहार एवेति भावः ।

**४—प्रश्नः—'शक्त्याख्योऽर्थस्य शब्दगतः शब्दस्यार्थगतो वा सम्बन्धविशेषोऽभिधा' सूत्रमिदं सपदकृत्यं व्याख्याय दीक्षितोक्तलक्षणमुल्लिख्य ग्रन्थोक्तदिशा तत्र दोषमुद्भाव्य कतिविधाऽभिधेति निर्णीयताम् ।**

**उत्तरम्**—शब्दविशेषादर्थविशेषस्य बोधो भवतीति सर्वेषामनुभवसिद्धं वस्तु । स चार्थः तेन शब्देनासम्बद्धो न भवितुमर्हति, अन्यथा घटपदात्पटप्रत्ययोऽप्यापतेत् । अतः शब्दार्थयोः परस्परं कश्चन सम्बन्धविशेषोऽवश्यमभ्युपेयः । तथा च वस्यार्थस्य येन शब्देन सम्बन्धविशेषस्तिष्ठति तेन शब्देन सोऽर्थः प्रत्याय्यते इति नियमे फलिते नातिप्रसङ्गः । स एव शक्तिपदप्रतिपाद्यः शब्दार्थयोः सम्बन्धविशेषोऽभिधीयते = उच्यते अनया इति व्युत्पत्तियोगादभिधा नाम । सम्बन्धस्य द्विष्ठतयाऽर्थनिरूपितः शब्दनिष्ठ एव सम्बन्धोऽभिधेत्यत्र विनिगमकाभावात् शब्दनिरू-

पितस्यार्थनिष्ठस्यापि सम्बन्धविशेषस्याभिधात्वमिष्टमिति सूचयितुम् 'शब्दस्यार्थगतो वे'ति लक्षणे ग्रन्थकृदाह । सा चाभिधा घटपदात् घटः (कम्बुग्रीवादिमद्व्यक्तिः) बोद्धव्यः, पटपदात् वस्त्रं बोधितव्यम्' इत्याद्याकारिकेश्वरेच्छैवेति नैयायिकाः, वैयाकरणमीमांसकादयस्तु ईश्वरेच्छाया अभिधात्वे तदीयज्ञानस्याप्यभिधात्वं स्वीकरणीयं विनिगमनाविरहादिति अनिर्णयभीत्या पदार्थान्तरमेवाभिधामाचक्षते ।

दीक्षितास्तु 'शक्त्या प्रतिपादकत्वमभिधा' इति लक्षणमकार्षुः तन्न हृदयङ्गमम्; अभिधायकशब्दगतस्य प्रतिपत्तिकारणत्वरूपस्य प्रतिपादकत्वस्य ज्ञानम् 'एतच्छब्दनिष्ठप्रतिपादकत्वमस्ती' त्याकारकं नार्थप्रतिपत्तौ कारणं भवितुं योग्यमिति तस्य लक्षणस्यासंगतेः । यदि प्रतिपादकत्वपदस्य प्रतिपत्त्यनुकूलव्यापाररूपमर्थं कृत्वा तज्ज्ञानस्य प्रतिपत्त्युपयोगित्वेन लक्षणसंगतिं सम्पादयितुं चेष्टेरन्; तदापि न निस्तारः लक्षणघटकेन शक्त्येत्यनेन शब्दार्थगतायाः कस्याश्चित् शक्तेः प्रतिपत्तिहेतुताविवक्षणे तस्य एवाभिधात्वेन 'अभिधया प्रतिपादकत्वम् अभिधा' इत्यस्यैव लक्षणत्वे पर्यवसिते आत्माश्रयापातात् । सा चाभिधा त्रिविधा, केवलसमुदायशक्ति केवलावयवशक्ति-समुदायावयवशक्तिसंकरभेदात् । एत एवाभिधाप्रकारा रूढियोगयोगरूढिपदैर्व्यपदिश्यते । केचित्तु 'अश्वगन्धा यश्वकर्णमण्डप-निशान्तादिशब्देषु पूर्वोक्तप्रकारत्रयस्याप्यसंगमनात् चतुर्थमपि प्रकारमिच्छन्ति । 'अखण्डा एव शब्दाः' प्रकृतिप्रत्ययादिविभागः काल्पनिकः, एवञ्च समुदायशक्तिरेव सर्वत्रेत्यपि केचित् । केवलसमुदायशक्तिस्वीकारे यदि क्वचित् पुनरुक्त्यापातस्तदा तत्र लक्षणया निर्वाह इति तद्भावः ।

**५—प्रश्नः—कारणनिर्वचनपूर्वकं लक्षणाया लक्षणं तद्भेदांश्च पण्डितराजमतेन प्रदर्श्य प्राचीनापेक्षया एतन्मते निरूढलक्षणायां कश्चिद् विशेषोऽस्ति न वा ? अस्ति चेत् कः स इति साधु निगद्य निरूढलक्षणाया उदाहरणानि प्रपञ्च्यन्ताम् ।**

**उत्तरम्**—शक्यसम्बन्धो लक्षणा । तात्पर्यानुपपत्तिः रूढिप्रयोजनयोरन्यतरच्च तस्याः कारणम् । मुख्यार्थान्वयानुपपत्तिस्तु न हेतुः, तथा सति 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र लक्षणानुपपत्तेः काकपदमुख्यार्थस्यापि रक्षणक्रियान्वयसम्भवेऽन्वयानुपपत्तेरभावात् । अथ लक्षणोहेतुत्वेनोक्ता केयं तात्पर्यानुपपत्तिः ? मुख्यार्थता-

वच्छेदके तात्पर्यविषयान्वयितावच्छेदकताया योऽभावस्तद्रूपा ? तात्पर्यविषयान्वये मुख्यार्थतावच्छेदकरूपेण मुख्यार्थप्रतियोगिकताया योऽभावस्तद्रूपा वा ? नाद्यः, शक्यतावच्छेदकरूपेणैव लक्ष्यमानस्य स्वीकारेण सर्वत्र मुख्यार्थतावच्छेदके तात्पर्यविषयान्वयितावच्छेदकताया एव सत्त्वेन तदभावस्य क्वाप्यसत्त्वेन असम्भवापत्तेः। द्वितीयश्चेदमिति ब्रूते ग्रन्थकारः। सेयं लक्षणा प्रथमं द्विविधा—निरूढा प्रयोजनवती च, तत्र प्रयोजनवती पुनः द्विविधा—गौणी शुद्धा च। तत्राद्या सारोपा, साध्यवसाना च, अन्यथा चतुर्विधा—जहत्स्वार्था, अजहत्स्वार्था, सारोपा, साध्यवसाना चेति षड्विधा प्रयोजनवती, निरूढा चैकविधेति सप्तविधा लक्षणा प्रधानतो जगन्नाथमतेन भवतीति बोध्यम्। तत्र निरूढाया अनुकूलप्रतिकूलानुलोमप्रतिलोमलावण्यादयो नीलादयश्च शब्दा उदाहरणानि। धर्मस्यानुकूलोऽयमित्यादौ मुख्यार्थस्य कूलानुगताविरूपस्य बाधात् अनादिप्रयोगप्रवाहवशात् एकवस्तुप्रवणत्वरूपेण सादृश्यात्मना सम्बन्धेन अनुगुणादयो लक्ष्यन्ते। एवं 'नीलो घटः' इत्यादौ नीलादेर्गुणवाचकतया सामानाधिकरण्येनान्वयस्यानुपपत्तेः समवायात्मना गुणरूपशक्यस्य सम्बन्धेन नीलादिपदैर्गुणिनो लक्ष्यन्ते। निरूढलक्षणाविषये मम्मट जगन्नाथयोर्मतभेदो नास्ति, विश्वनाथस्य साहित्यदर्पणकारस्यापेक्षया पण्डितराजमतेऽस्ति विशेषः स यथा—विश्वनाथो रूढ्यर्थमेव मुख्यार्थमङ्गीकृत्य मम्मटभट्टप्रदत्त निरूढलक्षणोदाहरणं 'कर्मणि कुशलः' इति खण्डयति तया रीत्या अनुकूलादयोऽपि न लक्षणोदाहरणानि भवितुमर्हन्ति। पण्डितराजश्च मम्मट इव योगलब्धमेवार्थं मुख्यं मत्वा तान्युदाहरणानि स्वीकरोति, इत्येको विशेषः। द्वितीयश्च पण्डितराजो निरूढलक्षणाया भेदान् न कुरुते, विश्वनाथस्तु कुरुते तस्या अपि भेदानिति।

**६—प्रश्नः—'मुखं चन्द्रः' इत्यादिरूपकस्थले चन्द्रपदस्य स्वसदृशे लक्षणामङ्गीकृत्य विधीयमाने चन्द्रसदृशमिति बोधे 'चन्द्रसदृशमि'त्युपमास्थलीयबोधापेक्षया वैलक्षण्यविरहेणोत्थितां रूपकोपमयोर्भेदाभावशङ्कां समाधातुं प्राचीनैरुपदर्शितान् प्रकारान् ग्रन्थोक्तदिशा वर्णयन्तु।**

**उत्तरम्—'मुखं चन्द्रः'—'चन्द्रसदृशम् मुखम्'** इत्यनयोः रूपकोपमालक्ष्ययो**र्यद्यपि बोधः समान एव तथापि** रूपकस्थले लक्षणया तत्फलीभूतं मुखचन्द्रयोस्ता**द्रूप्यसंवेदनम् भवति, उपमायां तन्न भवतीति** स्फुटस्तयोर्भेदः। ननु विषये मुखादौ

विषयितावच्छेदकस्य चन्द्रत्वादेः प्रतीतिरेव ताद्रूप्यसंवेदनमिहाभिप्रेतं तच्च लाक्षणिकात्तत्सदृशबोधादपि कथं स्यात् ? उपायाभावात् वाधनिश्चयेन प्रतिवन्धाच्च, अन्यथा उक्तोपमास्थलेऽपि ताद्रूप्यप्रत्ययप्रसङ्ग इति चेन्न, श्लेषस्थल इवात्रापि एकशब्दोपादानोत्थस्य व्यञ्जनस्योपायत्वाद् वैयञ्जनिकबोधस्य बाधबुद्धयप्रतिबध्यत्वाच्च । न चैवमपि चन्द्रसदृशे चन्द्रताद्रूप्यप्रतीतिर्भवेत् न तु मुखत्वविशिष्टे मुखे इति वाच्यम् । स्वताद्रूप्यवदभेदबुद्धया स्वताद्रूप्यस्य सुबोधतया तस्मिन्नपि तस्य सिद्धेरित्येके ।

अन्ये तु न फलीभूतसंवित्तिमात्रकृत एवोपमातो रूपकस्य भेदोऽपि तु स्वरूपसंवित्तिकृतोऽपि । तथा हि—चन्द्रादिपदेभ्यो लक्षणया चन्द्रसदृशत्वेनापि रूपेणोपस्थितानां मुखादीनां चन्द्रत्वेनैव रूपेण मुखादिपदोपस्थापितैः सहाभेदान्वयबोधः सञ्जायते, तत्तत्पदलक्षणज्ञानस्य तत्तत्पदशक्यतावच्छेदकप्रकारकलक्ष्यान्वयबोधत्वावच्छिन्नं प्रति हेतुत्वात् । न चैवं पदार्थोपस्थितिशाब्दबोधयोः समानाकारत्वनियमो भज्येतेति वाच्यम्, यस्य नियमस्यानुभवसाक्षिकवैलक्षण्यकलाक्षणिकबोधातिरिक्तविषयकत्वात् । अत एव 'गङ्गायां घोषः' इत्यत्र तटत्वेनाप्युपस्थितस्य तटस्य गङ्गात्वेनान्वयबोधस्तत्प्रयोज्यः शैत्यपावनत्वादिप्रत्ययश्च संगच्छते । अपरे पुनरपरथैव रूपकोपमयोर्भेदमुपवर्णयन्ति, तथाहि—भेदघटितं सादृश्यमुपमानियामकम् तदघटितं च तद्गौणसारोपलक्षणायाः इति भेदे स्पष्टे, फलकृतवैलक्षण्यपर्यनुधावनं व्यर्थमेव । अस्मिन् कल्पे भेदघटितसादृश्यप्रतीतेस्ताद्रूप्यप्रत्ययः कथं भवितुमर्हतीत्यनुपपत्तिपरिहाराय न कश्चिदायासो विधेयः ।

**७—प्रश्नः—'मुखं चन्द्रः' इत्यादौ लक्षणामन्तरेणैवाभेदान्वयबोधमुपपादयता नयं सानुनयं समुपपाद्य तत्रत्यं विचारचातुर्यं चतुरस्रं समुदञ्चयत ।**

**उत्तरम्**—नव्यास्तु 'मुखं चन्द्रः'—'वाहीको गौः' इत्यादौ लक्षणामन्तरेणैव चन्द्रादीनां मुखादिभिः सहाभेदान्वयबोधः सम्भवति । ननु 'मुखं न चन्द्रः'—'वाहीको न गौरि'ति सार्वजनीने बाधनिश्चये कथं तयोरभेदबोधसम्भव इति चेन्न । बाधनिश्चयप्रतिबध्यतावच्छेदककोटावनाहार्यत्वस्येव शाब्दान्यत्वस्यापि निवेशनीयत्वात् । अत एव 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति शाब्दिकानां सिद्धान्तोऽपि संगच्छते । नचैवं 'वह्निना सिञ्चति' इत्यतोऽपि वाक्याद्

शाब्दबोधापत्तिरिति शङ्क्यं योग्यताज्ञानाभावात् । अथ 'मुखं चन्द्रः' इत्यादावपि योग्यताज्ञानविरह इति तु न वक्तुं शक्यम्, अत्रत्योऽभेदान्वयबोधः इष्टचमत्कार-प्रयोजकः, इति ज्ञानाधीनाया इच्छायाः सत्त्वेन आहार्ययोग्यताज्ञानेसाम्राज्यात् । अथवा अभेदान्वयबोध एव 'मुखं चन्द्रः' इत्यादावाहार्योऽङ्गीकार्यः । एवं च बाधनिश्चयप्रतिबध्यतावच्छेदककुक्षौ शाब्दान्यत्वनिवेशस्य नावश्यकता न वा शाब्दबोधे योग्यताज्ञानस्य कारणत्वकल्पना । 'आहार्यं प्रात्यक्षिकमेवेति नियमो न स्वीक्रियत' इति भावः । अपि चोषमानवाचकस्य चन्द्रादिपदस्य रूपके उपमान-सदृशे लक्षणा इति प्राचां सिद्धान्तः । तत्र लक्ष्यतावच्छेदकं सादृश्यम् । तच्च समानधर्मरूपम् । स च लक्ष्यांशे सुन्दरत्वादिना विशेषरूपेण प्रतीयते, उताहो सामान्यरूपेण ? नाद्यः 'सुन्दरं मुखं चन्द्रः' इत्यादौ पौनरुक्त्यापत्तेः । नान्त्यः, सादृश्यस्य शब्दोपात्तत्वेनोपमात्वापत्तेः । न च सादृश्यस्य वाच्यतायामेवोपमा-व्यवहा,र 'नलिनप्रतिपक्षमाननम्' इत्यादौ उपमाभावप्रसक्तेरिति वदन्ति ।

**८–प्रश्न :–लक्षणां विनैव 'मुखं चन्द्रः' इत्यादौ अभेदान्वयबोधमुपपा-दयतां नव्यानां पण्डितराजोक्तरीत्या निरसनीयम् ।**

**उत्तरम्**—यत्तु नामार्थयोरभेदान्वयबोधेनैवोपपत्तौ 'रूपके नास्ति लक्षणे'ति नव्या आहुस्तन्न चमत्कारिसाधारणधर्मानुपस्थितिदशायामुपमालङ्कारस्येव रूप-कालङ्कारस्यापि चमत्काराजनकतया निष्पत्त्यभावात् । न च साधारणधर्मानु-पस्थितौ रूपकनिष्पत्तिर्न तदुपस्थितौ चास्तीत्यत्र किं विनिगमकमिति वाच्यम्, 'भारतं नाकमण्डलम्'–'नगरं विधुमण्डलम्' इत्यादिवाक्याकर्णनानन्तरमपि सुपर्वालंकृतसकलकलादिशब्दश्रवणविरहे रूपकानुन्मेषस्य तच्छब्दश्रवणोत्तरञ्च तदनुन्मेषस्य जायमानस्य विनिगमकत्वात् । एवञ्च यदि रूपके साधारणधर्मवत्त्वरूपं सादृश्यं नापेक्षितं स्यात् तदा कथं साधारणधर्मानुपस्थितिकालेऽपि रूपकं न पर्यव-स्येत् चमत्कारं वा, न च रूपकप्रतीतेरुपमानाभेदविषयत्वविरहे 'सिंहेन सदृशो नायं किन्तु सिंहो नराधिपः' इत्यादौ निषेध्यविधेययोरसंगतिरिति वक्तव्यम्, रूपके ताद्रूप्यप्रतीतेः प्राचीनैः स्वीकारात् । न च विधेयकोटौ प्राचां मते सादृश्यस्यापि प्रविष्टतया तन्निषेधानुपपत्तिस्तथापि स्थितैवेति भ्रमितव्यम्, भेदघटितसादृश्य-रूपाया उपमाया एव निषेध्यत्वात् तिरोभूतभेदसादृश्यलक्षणस्य रूपकस्यैव विधेय-

त्वाच्च । लक्ष्यतावच्छेदकस्य सादृश्यस्य रूपके सामान्यरूपेणैव प्रतीतिः । न चैव सादृश्यस्य शब्दोपात्ततया उपमात्वापत्तेरुक्तायाः का गतिरिति वाच्यम्, भेदाघटित-सादृश्यविशिष्टस्य रूपके लक्ष्यत्वादुपमाव्यपदेशस्याप्रसक्तेः, 'सादृश्यमुपमाभेदे' इति तत्सिद्धान्तात् ।

**६—प्रश्नः—मम्मटोक्तं दीक्षितोक्तं चोपमालक्षणं निरस्य पण्डितराजाभिमतं तल्लक्षणं सपदकृत्यं समुल्लिखन्तु ।**

**उत्तरं**—'साधर्म्यमुपमा भेदे' इति मम्मटोक्तमुपमालक्षणं न रमणीयं व्यतिरेके निषेधप्रतियोगिनि सादृश्येऽतिव्याप्तेः । ननु पर्यवसितत्वेन साधर्म्यं विशेषणीयम् इति चेन्न, अनन्वयस्थसादृश्यस्यापर्यवसायित्वेनैव वारणे तद्वारिकाया 'भेदे' इत्युक्तेर्वैयर्थ्यापत्तेः । काव्यालङ्कारप्रस्तावे लौकिकालौकिकप्रधानवाच्यव्यङ्ग्योपमासामान्यलक्षणकरणानौचित्याच्च ।

'उपमितिक्रियानिष्पत्तिमत्सादृश्यवर्णनमदुष्टमव्यङ्ग्यमुपमा'-'स्वनिषेधापर्यवसायिसादृश्यवर्णनं वा तथाभूतं तथेति दीक्षितकृतमुपमालक्षणद्वयमपि न सम्यक् विलक्षणशब्दात्मकस्य विलक्षणज्ञानात्मकस्य वा वर्णनस्य शब्दवाच्यताविरहेणार्थालंकारताया बाधात् । तस्य सर्वथैवाव्यङ्ग्यत्वेनाव्यङ्ग्यत्वविशेषणवैयर्थ्याच्च । अथ वर्णनविषयीभूतं तादृशसादृश्यमुपमेति यद्युच्यते, तदा 'यथा गोस्तथा गवय' इत्यत्रोपमालंकारापत्तेः । एवं 'कालोपसर्जने च तुल्यम्' इत्यादावपि तत्त्वापत्तेः, अशिष्यत्वादिना प्रधानप्रत्ययार्थवचनसादृश्यस्यात्रापि प्रतिपादनात् । न चोक्तस्थलेषु निष्पत्तावप्युपमितिक्रियाया न सादृश्यवर्णनं विषयस्याचमत्कारित्वात्, चमत्कारविषयककविव्यापारस्यैव वर्णनपदार्थत्वादिति वाच्यम्, एवं हि चमत्कारित्वस्य लक्षणेऽवश्यं निवेशनीयतया उपमितिक्रियानिष्पत्तिविशेषणस्य वैयर्थ्यात् । न हि अनिष्पन्नमापाततः प्रतीयमानं सादृश्यं चमत्कृतिमाधत्ते । एवं द्वितीयेऽपि लक्षणे निषेधापर्यवसायित्वं निरर्थकम्, व्यतिरेके कमलाद्युपमानसादृश्यनिषेधस्यानन्वये च सर्वथा सादृश्यनिषेधस्य चमत्कारितया सादृश्यस्य तदर्थं निरुप्यमाणस्यापि चमत्कारिताविरहेणैव तत्रातिव्याप्तिनिराससंभवात् । 'उपमितिक्रियानिष्पत्तिमद्वर्णनमुपमे'त्येतावतैव सामञ्जस्ये लक्षणे सादृश्यविशेषणमपि मुधैव ।

'सादृश्यं सुन्दरं वाक्यार्थोपस्कारकमुपमालंकृतिः' इति पण्डितराजेन कृतं लक्षणम् । अत्र सौन्दर्यं नाम चमत्कृत्याधायकत्वम्, चमत्कृतिश्चानन्दविशेषः

सहृदयहृदयप्रमाणकः । अनेन विशेषणेन अनन्वयव्यतिरेकादिषु भेदप्रधानेषु, रूपकापह्नुतिपरिणामभ्रान्तिमदुल्लेखादिषु चाभेदप्रधानेषु नोपमालक्षणातिव्याप्तिः सादृश्यस्यानन्वये द्वितीयसब्रह्मचारिनिवर्तनमात्रार्थमुपात्तत्वेन व्यतिरेके चमत्कारि-निषेधनिरूपणाय प्रतियोगिविधया निरूपिततया, रूपकादिषु तत्तदलंकारनिष्पादक-तया च चमत्कारित्वाभावात् । वाक्यार्थोपस्कारकमित्यनेन प्रधानव्यङ्ग्यस्य सादृश्यस्य निरासो बोध्यः ।

**१०–प्रश्नः–चित्रमीमांसाऽलंकारसर्वस्वकृतोर्लक्षणे विदूष्योपमेयोपमा-लक्षणं जगन्नाथकृतं प्रदर्शनीयम् ।**

**उत्तरम्**—चित्रमीमांसाकारो दीक्षितः 'अन्योन्येनोपमा बोध्या व्यक्त्या वृत्त्यन्तरेण वा । एकधर्माश्रया या स्यात्सोपमेयोपमा मता ॥' इति लक्षणमाह, तन्न युक्तम्, 'अहं लतायाः सदृशीत्यखर्वं गौराङ्गि ! गर्वं न कदापि यायाः । गवेषणेनालमिहापरेषामेषाऽपि तुल्या तव तावदस्ति ॥' इत्यत्रान्योन्यप्रतियोगिकत्व-विशिष्टाया उपमायास्तनुत्वादिरूपैकधर्माश्रयाया वृत्त्यन्तरेण शक्त्या बोधना-दुपमेयोपमात्वापत्तेः । न चात्रान्योन्यप्रतियोगिकत्वमुपमायां न प्रतीयते, लतादि-सम्बन्धिसादृश्याश्रयत्वस्यैवास्मत्पदार्थेऽन्वयादिति वाच्यम्, तथा स्वीकारे 'मुखस्य सदृशश्चन्द्रश्चन्द्रस्य सदृशं मुखम्' इत्युपमेयोपमायामव्याप्तेः । 'न ह्यहं लतायाः' इत्यत्रोपमेयोपमा भवितुमर्हति । गर्वमात्रनिरासपरत्वेनोत्तरार्धोपमाया-स्तृतीयसदृशव्यवच्छेदाप्रतिपत्तेः । तृतीयसदृशव्यवच्छेद एवोपमेयोपमाजीवितमिति साहित्यिकसिद्धान्तः । न च तृतीयसदृशव्यवछेदफलकत्वमुपमाविशेषणं वाच्यम्, विशेषणान्तरवैयर्थ्यापत्तेः । तेन विशेषणेनैव सकलव्यावर्त्यवारणात् ।

यदप्यलङ्कारसर्वस्वकृतोक्तम् 'द्वयोः पर्यायेण तस्मिन् उपमेयोपमा ।' तच्छब्दे-नोपमानोपमेयत्वपरामर्शः । पर्यायो यौगपद्याभावः । अत एवात्र 'वाक्यभेद' इति तन्न, द्वयोरित्यस्य व्यर्थत्वात्, एकस्योपमानोपमेयत्वे वाक्यभेदाभावेन पर्याया-भावादेवाप्रसक्तेः । तस्य स्पष्टार्थत्वेऽपि 'अहं लतायाः' इति प्रागुदाहृतेऽतिव्याप्तेः । 'तद्वल्गुना' इत्यादिकालिदासपद्ये प्रतिपाद्यायामुपमानोपमेययोर्युगपदुपमेयोपमान-भावायामुपमेयोपमायां वाक्यवेदाभावेनाव्याप्तेश्च । 'सविता विधवति'–'रजोभिः स्यन्दनोद्धूतैरित्यादौ परस्परोपमालक्ष्येऽतिव्याप्तेश्च ।

अतो जगन्नाथकृतमेव लक्षणं निर्दुष्टं वेदितव्यम्, तच्च—तृतीयसदृशव्यवच्छेद-बुद्धिफलकवर्णनविषयीभूतम् परस्परमुपमानोपमेयभावमापन्नयोरर्थयोः सादृश्यं सुन्दरमुपमेयोपमा। इति।

**११—प्रश्नः—अनन्वयालङ्कारं लक्षयित्वा 'लक्ष्ये संगमय्य मतान्तराण्या-विष्कृत्य सयुक्तिकं खण्ड्यन्ताम्।**

**उत्तरम्**—द्वितीयसदृशव्यवच्छेदफलकवर्णनविषयीभूतं यदेकोपमानोपमेयकं सादृश्यं तदनन्वयः।

कृतक्षुद्राघोघानथ सपदि सन्तप्तमनसः समुद्धर्तुं सन्ति त्रिभुवनतले तीर्थनिवहाः।
अपि प्रायश्चित्तप्रसरणपथातीतचरितान्नरानूरीकर्तुं त्वमिव जननि त्वं विजयसे॥

इति पद्यमनन्वयालङ्कारस्य रमणीयमुदाहरणमवगन्तव्यम्। यतोऽत्र त्वमिव जननि! त्वं विजयसे' इत्युक्त्या गङ्गा एवोपमानमुपमेयं च यत्र तादृशं सादृश्यं प्रतीयते। येन गङ्गासदृशी द्वितीया कापि नास्तीति प्रत्ययेन द्वितीयसदृशव्यवच्छेदः स्फुटमेव फलति।

यत्तु रत्नाकरेण—'तेन तदेकदेशेनावसितभेदेन वोपमानतया कल्पितेन सादृश्य-मनन्वयः' इति सामान्यलक्षणमाख्याय 'उपमेयेनैवोपमानतया कल्पितेनोपमेय-स्यामुखावभासमानसाधर्म्यापादनमेकोऽनन्वयः। उपमेयैकदेशस्य तथैवोपमानता-कल्पनमपरः। उपमेयस्यैव प्रतिविम्बत्वादिना भेदेनावसितस्य तत्त्वकल्पनं तृतीयः। इतीमे त्रयो भेदा दर्शिताः। तन्न, उपमानान्तरविरहप्रतीतिमात्रादेवानन्वयत्वे 'स्तनाभोगे पतन्भाति' इत्यत्रोपदर्शितायाः कल्पितोपमाया अपि अनन्वयत्वापत्तेः। 'यद्यर्थोक्तौ च कल्पनम्' इति काव्यप्रकाशोक्ततृतीयातिशयोक्त्युदाहरणे 'राकायां यदि चन्द्रस्य निष्कलंकं वपुः स्यात् तर्हि तस्या मुखं पराभूयेत' इत्यादौ मुखस्य निरुपमत्वप्रतीत्याऽतिव्याप्तेश्च।

यदपि चालङ्कारसर्वस्वकृता 'एतावति प्रपञ्चे सुन्दरमहिलासहस्रभरितेऽपि। अनुहरति सुभग! तस्या वामार्धं दक्षिणार्धस्य।' इत्यात्रानन्वयध्वनित्वमुक्तम्, तदपि तुच्छमेव, अनन्वयस्य हि उपमाननिषेधफलकमभिन्नोपमानोपमेयकं सादृश्यं स्वरूपमित्युक्तम्। प्रकृते च वामार्धदक्षिणार्धयोस्तद् बाधितमिति तथोक्तेरयुक्त-त्वात्। कान्तायाः पुनरुपमाननिषेधस्य व्यङ्ग्यत्वेऽपि अभिन्नोपमानोपमेयक-सादृश्यस्यानन्वयस्वरूपस्याप्रतीतेः। एवम् दीक्षितोऽपि 'अथ या मम गोविन्द'

इत्यादिपद्यं व्यङ्ग्यानन्वयोदाहरणप्रसंगे समवोचत्, तदपि न समुचितम्, त्वदागमनजन्यप्रतीतेः सदृशी कालान्तरीणत्वादागमनप्रभवाप्रीतिरस्तीति तस्मात्पद्यात् प्रतीत्या अनन्वयपद्ययोगार्थाभावात् तस्यालङ्कारस्यासम्भवात्।

१२—**प्रश्नः—लक्षणोदाहरणाभ्यामनन्वयासमालङ्कारौ सप्रपञ्चमुपपाद्य तयोः परस्परं विविक्तविषयत्वं समर्थ्यताम्।**

**उत्तरम्**—अनन्वयालङ्कारस्य लक्षणोदाहरणे (११) प्रश्नस्योत्तरे समुल्लिखिते। असमालङ्कारस्य च 'सर्वथैवोपमानिषेधः' इति लक्षणं बोध्यम्। उदाहरणमस्य 'भुवनत्रितयेऽपि मानवैः परिपूर्णं विबुधैश्च दानवैः। न भविष्यति नास्ति नाभवन्नृप यस्ते भजते तुलापदम्॥' इति पद्यमवसेयम्। यद्यपि अनन्वयस्थलेऽप्यसमालङ्कारो नियतो व्यङ्ग्यस्तथापि तत्र वाच्यस्यानन्वयस्य चमत्कारे व्यङ्ग्यस्यासमस्य चमत्कारोऽनुगुणतया गौणोऽतो रूपकदीपकादावुपमैव न पृथगलङ्कारव्यपदेशं भजते। वाच्यतायां तु स्वातन्त्र्येण चमत्कारितया पृथगलङ्कारव्यपदेशभाक्। एवञ्चानन्वयस्थले स्वसादृश्यं भासते, अत्र तु अतुल्यतैव प्रतीयते इति भेदो मन्तव्यः।

१३—**प्रश्नः—प्राचीनैरस्वीकृतोऽप्यसमालंकारः कया युक्त्या प्रतिपादितः पण्डितराजेन? किमस्य लक्षणम्? किं वा लक्ष्यम्? कथमस्योपमानलुप्तोपमायां नान्तर्भावः? रत्नाकरोक्तं कथं न संगच्छते? सर्वमेतदन्यच्चापेक्षितं स्वबुद्ध्या विविच्यसमालङ्कारः स्थाप्यताम्, उच्यताञ्च—**

**'पूर्णमसुरै रसातलममरैः स्वर्गो वसुन्धरा च नरैः।**
**रघुवंशवीरतुलना तथापि जगति निरवकाशैव॥'**

**पद्यमेतत् कस्योदाहरणमिति।**

**उत्तरम्**–विभिन्नश्चमत्कारः एवं विभिन्नानामालङ्कारस्वीकारहेतुः। कथमन्यथा सादृश्यमूलकत्वाविशेषेऽपि उपमारूपकादीनां विभिन्नालङ्कारता स्यात्। एवञ्च पण्डितराजस्यासमालङ्काराङ्गीकारोऽतितमामौचितीमावहति। यतो 'भूमीनाथ! शहाबदीन! भवतस्तुल्यो गुणानां गणै–रेतदद्भुतभवप्रपञ्चविषये नास्तीति किं ब्रूमहे। धाता नूतनकारणैर्यदि पुनः सृष्टिं नवां भावये–न्न स्यादेव तथापि तावकतुलालेशं दधानो नरः'॥ इत्यादि पद्येऽसमालङ्कारोदाहरणे उपमेयस्यातुल्यताप्रतिपादननिबन्धनो विच्छित्तिविशेषो विद्यते। यदि स्वस्मिन् स्वसादृश्यमव-

गाहमानेनानन्वयालङ्कारेणाविषयी कृतमिदमतुल्यत्वाभिधानमलङ्कारान्तरं न स्वीकार्यं विच्छित्तिविशेषे विद्यमानेऽपि, तर्हि उपमातिरिक्तसादृश्यमूलकबह्वलंकाराणां लोप एव प्रसज्येत । प्राचीनाः प्रायः स्वयमुदाहरणानुरूपकाव्यनिर्माणासमर्था उदाहरणानुपलम्भादेव नाङ्गीकृतवन्तोऽसमालंकारम् । पण्डितराजस्तु स्वयमुदाहरणानुकूलकाव्यकल्पनाकुशलतादृशान्युदाहरणान्युपलभमानः स्वीचक्रेऽमुमलङ्कारम् । एवञ्चासमालङ्कारस्वीकारे तदुपयुक्तोदाहरणदानमेव महती युक्तिः पण्डितराजस्येति बोध्यम् ।

लक्षणमस्यालङ्कारस्य द्वादश ( १२ ) प्रश्नसमाधानप्रसंगे दर्शितमेव लक्ष्यमत्रैवानुपदमुक्तम् । उपमानलुप्तोपमायां गतार्थत्वमस्य न सम्भवति, तस्याः क्वाचित्कसदृशनिषेधविषयकत्वात् अस्य चात्यन्तिकसदृशनिषेधरूपत्वात् । इत्थञ्चात्र सर्वथैवोपमाननिषेधेन सादृश्यस्याप्रतिष्ठानादुपमाया गन्धोऽपि नास्तीति भावः ।

रत्नाकरः 'ढुण्ढुलन्तो मरीहसि' इति श्लोकेनोपमानलुप्तोपमा तस्याः सम्भवदुपमानानुपादानविषयत्वात्, अपि तु असमालङ्कारः, इति व्याजहार तदसत्, 'भ्रमर ! भ्रमन्नपि त्वं मालतीकुसुमसदृशं न प्राप्स्यसि' इत्युक्त्या वर्ततां नाम तत्सदृशं क्वापि त्वया तु दुष्प्रापमेवेति प्रतीतेरात्यन्तिकोपमाननिषेधाभावादसमस्याप्रसक्तेः उपमानलुप्तोपमायाश्च प्रसक्तेः ।

अथासमालङ्कारध्वननेनैव चमत्कारोपपत्तेरनन्वयस्य पृथगलङ्कारता कथमितिचेत् सत्यम्, दीपकादेरप्युपमाऽभिव्यक्त्यैव चमत्कारोपपत्तौ कथं नाम पृथगलङ्कारत्वमिति तुल्यमेव । अयमलङ्कारो द्विविधः क्वचित् उपमानस्य निषेधात् क्वचिच्च साक्षादुपमाया एव । तत्राद्यो दर्शितः पूर्वोदाहरणे, द्वितीयविधस्यासमालङ्कारस्योदाहरणम् 'पूर्णमसुरैरि'ति पद्यमिति ज्ञेयम् ।

**१४—प्रश्नः—सोदाहरणमुदाहरणालंकारमुल्लिख्यार्थान्तरन्यासेन तस्या गतार्थत्वे हेतुश्चोपपाद्य प्राचीनैरुक्तं तस्योपमात्वं भवद्भ्यो रोचते न वा ? न चेत् कथमिति सयुक्तिकं विवेचयन्तु ।**

**उत्तरम्**—सामान्येन निरूपितस्यार्थस्य सुखप्रतिपत्तये तदेकदेशं निरूप्य तयोरवयवावयविभाव उच्यमान उदाहरणम् । उदाहरणं यथा—

'अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति ।

निखिलरसायनराजो गन्धेनोग्रेण लशुन इव ॥' इति । न चात्र पदार्थलशुनयोरुपमा शक्या वक्तुम्, तयोः सामान्यविशेषभावेन सादृश्यस्यानुल्लासात् । तथात्वे तु इवादिशब्दानामिव सदृशादि शब्दानामप्यलंकारेऽस्मिन् प्रयोगः स्यात् । न चायमलंकारो गतार्थोऽर्थान्तरन्यासविशेषेण, अत्रैवादिप्रयोगनियमेनावयवावयविभावस्य वाच्यत्वात्, सामान्यविशेषयोरेकविधेयान्वयनियमाच्च । अर्थान्तरन्यासे तु न वाच्योऽवयवावयविभावः, न वा सामान्यविशेषयोरेकरूपविधेयान्वयः । प्राचीना उदाहरणमलंकारान्तरं नाङ्गीकुर्वन्ति किन्तु उपमयैव गतार्थयन्ति । ननु सामान्यविशेषयोः सादृश्यस्यानुल्लासात् कथमुपमेति चेन्न 'न निर्विशेषं सामान्यं भवती'ति सिद्धान्तेन सामान्यान्तर्गतं विशेषमादाय निर्वाहात् । परमिदं गतार्थत्वकथनं प्राचाम् दुराग्रहमात्रं प्रतिभाति । सामान्यविशेषभावस्थले सूक्ष्मतया स्थितस्यापि सादृश्यस्य कुर्वद्रूपत्वाभावेन उपमात्वाप्रयोजकत्वादिति विज्ञेयं विज्ञवरैः ।

**१५—प्रश्नः—स्मरणालङ्कारं सचमत्कारं परिष्कृत्य तस्य भावत्वं वस्तुत्वं च सोदाहरणं विविच्य 'अत्युच्चा' इति पद्ये दीक्षितान् प्रत्याचक्षाणस्य पण्डितराजस्य मतमक्षुण्णं समीक्षयत ।**

**उत्तरम्**—सादृश्यज्ञानोद्बुद्धसंस्कारप्रयोज्यं स्मरणं स्मरणालंकारः । स्मरणस्य सादृश्यज्ञानोद्बुद्धसंस्काराप्रयोज्यत्वे, सत्यपि तत्त्वे प्रधानीभूतव्यङ्ग्यानुत्कर्षकत्वे च नालंकारतेति बोद्धव्यम् । जन्यत्वमपहाय प्रयोज्यत्वनिवेशेन 'एकीभवत्वलये'त्यादि पद्ये तल्पनिद्रयोः स्मरणस्य तादृशसंस्कारजन्यत्वाभावेऽपि तत्प्रयोज्यत्वसत्त्वेन नालंकारत्वहानिः । स्मरणमलंकारो भावो वस्तुमात्रञ्च भवति । तत्र चायं विवेकः सादृश्यमूलकत्वे स्मृतेरलंकारता, व्यंगयत्वे भावता, तयोरभावे वस्तुमात्रतेति । 'सा वै कलंकविधुरा मधुराननश्रीः' इत्यत्र भावरूपा स्मृतिः । 'दरानमत्कन्धरबन्धमीष'दित्यत्र वस्तुमात्रं स्मरणम् ।

दीक्षिताः स्मरणालंकारलक्षणनिविष्टसादृश्यमूलकत्वविशेषणव्यवच्छेद्यप्रदर्शनाय 'अत्युच्चाः' इति पद्यं व्याख्याय 'अत्र स्तूयमानभूसम्बन्धिनो भूभृतो रमणीयापि स्मृतिः न सादृश्यमूलेति नात्र स्मरणालंकारः । किन्तु स्मृतेः संचारिभावस्य भूभृद्विषयरतिभावाङ्गत्वात्प्रेयोऽलंकारः' इत्युक्तवन्तः अत्र पण्डितराजः प्रत्यवतिष्ठते-

अत्र स्मृतेर्भूभृद्विषयकरतिभावाङ्गतया प्रेयोऽलंकारताकथनं न युक्तम्ः भावस्यैव भावाङ्गताया प्रेयोऽलंकारत्वात् । अत्रत्या स्मृतिस्तु न भावो वाच्यत्वात्, 'व्यभिचार्यञ्जितो भावः' इति सिद्धान्तात् । ननु न भावाद्यङ्गीभूतभावत्वं प्रेयोऽलंकारलक्षणम्, अपि तु भावाङ्गीभूतसंचारित्वमात्रम्, तथा च प्रकृते स्मृतेर्वाच्यत्वेऽपि संचारित्वसत्त्वात् न काप्यनुपपत्तिरिति चेन्न, तर्हि तथैव इतराङ्गीभूतस्थायित्वमात्रस्य रसालंकारलक्षणत्वस्वीकारे बाधकाभावात् 'चराचरोभयाकारे'त्यादिश्लोके क्रोधस्य वाच्यत्वेपि देवताविषयकरतिभावाङ्गीभूतस्थायित्वानपायाद्रसालंकारतापत्तेः । अतः 'अत्युच्चाः' इति श्लोके पूर्वार्धव्यंगयायाः रतेरुत्तरार्धव्यंग्यभूभृद्विषयरतिभावांगत्वात् प्रेयोऽलंकारता वक्तव्येति ।

१६—**प्रश्नः—ग्रन्थोक्तान्यमतनिरासप्रकारप्रदर्शनपुरस्सरं स्मरणालंकारमुदाहरन्तु ।**

**उत्तरम्**—'स्मृतिः सादृश्यमूला या वस्त्वन्तरसमाश्रया ।
स्मरणालंकृतिः सा स्यादव्यङ्ग्यत्वविशेषिता ॥'

इति स्मरणालंकारलक्षणं दीक्षिता आहुस्तन्न, 'अपि तुरगसमीपादित्यत्रः सदृशस्य केशपाशस्य, 'दिव्याना'मित्यत्रासदृशस्य जलनिधिमन्थनस्य च संग्रहाय लक्षणे क्रियमाणस्य वस्त्वन्तरग्रहणस्य वैयर्थ्यात्, 'सादृश्यमूलास्मृति स्मरणालंकारः इत्येतावतैव सदृशासदृशस्मरणसंग्रहसंभवात्, 'सादृश्यमूले'त्युक्तौ सदृशविषयकत्वस्यालाभात् । 'सौमित्रे ! ननु सेव्यताम्, इत्यत्र व्यङ्ग्यस्मृतिव्यावृत्तये दीयमानमव्यङ्ग्यत्वविशेषणमपि लक्षणे दुर्निरीक्ष्यमेव । तत्र जानक्यालम्बनस्य निशासमयोद्दीपितस्य संतापाद्यनुभावितस्योन्मादपोषितस्य विप्रलम्भस्येव प्रधानव्यङ्ग्यत्वेनालंकार्यतया तदुत्कर्षिकायाः स्मृतिव्यक्तेर्व्यङ्ग्यत्वेऽप्यलंकारत्वसत्त्वेन तद्वारणप्रयासस्यानिष्टकरत्वात् । व्यङ्ग्यत्वालंकारत्वयोर्विरोधो नोद्भावयितु शक्यः, नित्यव्यङ्ग्यानां रसभावादीनां पराङ्गतायामलंकारत्वाभ्युपगमात् । प्रधानव्यङ्ग्यधारणाय पुनरुपस्कारकत्वविशेषणं सर्वेष्वलंकारेषु देयमेवेति भावः ।

'सदृशानुभवात् वस्त्वन्तस्मृतिः स्मरणम्' इति रत्नाकरालंकारसर्वस्वकारयोर्लक्षणमपि दूषणग्रस्तमेव, 'सन्त्येवास्मिन् जगति बहवः पक्षिणो रम्यरूपाः' इत्यादिषु सदृशस्मरणेन ( नतु सदृशानुभवेन ) उद्बुद्धेन संस्कारेण जनिते

स्मरणेऽव्याप्तेः, अनुभवपदमपहाय तत्र ज्ञानपदस्य लक्षणे निवेशेऽस्यापि संग्रहः सम्भवति । उदाहरणमस्यालंकारस्य निम्ननिर्दिष्टं पद्यं बोध्यम्—

'दोर्दण्डद्वयकुण्डलीकृतलसत्कोदण्डचण्डध्वनि-
ध्वस्तोद्दण्डविपक्षमण्डलमथ त्वां वीक्ष्य मध्येरणम् ।
वल्गद्गाण्डिवमुक्तकाण्डवलयज्वालावलीताण्डव-
भ्रश्यत्खाण्डवरुष्टपाण्डवमहो को न क्षितीशः स्मरेत् ॥'

**१७–प्रश्नः–सारोपलक्षणामूलकस्य कार्यकारणयोस्तादात्म्यस्यापि रूपकालङ्कारत्वं रत्नाकराभिमतं ग्रन्थोक्तदिशा निरस्य सपदकृत्यं जगन्नाथकृतं रूपकालङ्कारलक्षणमुल्लेखनीयम् ।**

**उत्तरम्**—यत्तु रत्नाकरेणोक्तम्–सारोपलक्षणामूलकत्वस्य तुल्यत्वेन सादृश्यप्रयुक्तस्येव सम्बन्धान्तरप्रयुक्तस्यापि तादात्म्यस्य संग्रहीतुमौचित्यात् सादृश्यप्रयुक्तः सम्बन्धान्तरप्रयुक्तो वा यावान् भिन्नयोः सामानाधिकरण्यनिर्देशः स सर्वोऽपि रूपकमिति तन्न । अपह्नुतीत्यादौ भिन्नयोः सामानाधिकरण्यस्य सत्त्वात् तत्रातिव्याप्तेः । सादृश्यामूलकस्यापि कार्यकारणयोः कल्पितस्य ताद्रूप्यस्य रूपकत्वांगीकारे तद्वत् सादृश्यामूलकस्येव चिन्तादिमूलकस्य स्मरणस्यापि अलङ्कारत्वेन स्वीकार्यतापत्तौ सम्प्रदायव्याकुलीभावात् ।

पण्डितराजस्तु 'उपमेयतावच्छेदकपुरस्कारेणोपमेये शब्दान्निश्चीयमानमुपमानतादात्म्यं रूपकम्, तदेवोपस्कारकत्वविशिष्टमालङ्कारः' इति लक्षणं कुरुते । अत्रोपमेयतावच्छेदकपुरस्कारेणेति विशेषणात् अपह्नुति-भ्रान्तिमान्-अतिशयोक्ति-निदर्शनानां निरासः । अपह्नुतो उपमेयस्य निषिध्यमानत्वात् । भ्रान्तिमति भ्रान्तिजनकदोषेणैव उपमेयस्य बाध्यमानत्वात् । अतिशयोक्तिनिदर्शनयोश्च साध्यवसानलक्षणामूलकत्वेन उपमेयतावच्छेदकस्य पुरस्काराभावात् । शब्दादिति कथनेन प्रात्यक्षिकाहार्यनिश्चयगोचरतादात्म्यस्य व्यवच्छेदः । निश्चीयमानमिति विशेषणेन 'नूनं मुखं चन्द्रः' इत्युत्प्रेक्षायाः सम्भावनात्मिकाया व्यावृत्तः । उपमानोपमेयपदसंकीर्तनेन सादृश्यलाभात् 'सुखं मनोरमा रामा' इत्यादिशुद्धारोपविषयतादात्म्यनिरासो बोध्यः ।

**१८—प्रश्नः—दीक्षितोक्ते मम्मटोक्ते च रूपकलक्षणे दोषानुद्भाव्य 'परम्परितरूपके 'कमलावासकासारः' इत्यादौ एकस्यारोपस्यारोपान्तरोपायत्वं कथं सम्भवतीति ग्रन्थोक्तशङ्कासमाधानाभ्यां स्फुटीकुर्वन्तु ।**

**उत्तरम्**—दीक्षितैः 'बिम्बाविशिष्टे निर्दिष्टे विषये यद्यनिह्नुते,
उपरञ्जकतामेति विषयी रूपकं तदा ।।

इति लक्षणं कृतम्, तत्र 'बिम्बाविशिष्टे' इति विषयविशेषणेन, 'त्वत्पादनखरत्नानाम्' इति निदर्शनाया निरासः, 'निर्दिष्टे' इति विशेषणमतिशयोक्तिव्यावर्तकम् । 'अनिह्नुते' इति अपह्नुतिव्यावृत्त्यर्थम् । आहार्यताद्रूप्यनिश्चयगोचरतार्थंकम् 'उपरञ्जकताम्' इति पदं ससंदेहोत्प्रेक्षासमासोक्तिपरिणामभ्रान्तिमदलङ्कारेषु अतिव्याप्तिनिरासकमित्यादि व्याख्यातञ्च, तन्न, सुधीजनमनोमोदकरम् । 'त्वत्पादनखरत्नानाम्' इत्यत्र रूपकस्यैवोचित्येन तद्वारणप्रयासस्य विपरीतत्वात् । ननु कथं तत्र रूपकमेवोचितं न निदर्शना समुचितेति निश्चय इति चेन्न, सत्यपि श्रौतारोपेऽत्र रूपकानङ्गीकारे स्वीकारे च निदर्शनायाः 'मुखं चन्द्रः' इत्यादिरूपकान्तरेष्वपि निदर्शनात्वापत्तेः । किञ्च नात्र निदर्शनायाः सम्भवः । कथमिति चेदित्थम्-निदर्शना तावद् द्विविधा-पदार्थनिदर्शना वाक्यार्थनिदर्शना च, तयोरत्र प्रथमा न सम्भवदुक्तिका बिम्बप्रतिबिम्बभावापन्नपदार्थघटितविशिष्टार्थरूपवाक्यार्थयोरेवात्राभेदप्रतीतेः, द्वितीयापि तथैव, वाक्यार्थरूपकस्योच्छेदापत्तेः । रूपके बिम्बप्रतिबिम्बभावो नास्तीति कथनमपि भ्रान्तिमूलकमेव । सर्वस्वटीकायां विमर्शिन्याम् 'कंदर्पद्विपकर्णकम्बु' इत्यादौ बिम्बप्रतिबिम्बभावेन रूपकस्योदाहृतत्वात् ।

एवम् लक्षणे कथितस्य 'निर्दिष्ट' इत्यस्य कोऽर्थः ? येन केनचिद् रूपेण शब्दाभिहिते इति उताहो उपमेयतावच्छेदरूपेण ? आद्ये 'सुन्दरं कमलं भाति लतायामिदमद्भुतम्' इत्यादावतिप्रसंगः । द्वितीये 'अनिह्नुते' इति विशेषणवैयर्थ्यापातः अपह्नुतौ उपमेयस्य निषिध्यमानतया तेन रूपेण विषयस्यानिर्दिष्टत्वादेव लक्षणस्याप्रसक्तेः निश्चयगतमाहार्यत्वविशेषणवैयर्थ्यञ्च भ्रान्तिमति उपमेयतावच्छेदकसंस्पर्शाभावस्योक्तत्वात् । 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' इति स्वमुदाहृतापह्नुतौ अतिव्याप्तिश्च ।

'तद्रूपकमभेदो य उपमानोपमेययोः' इति मम्मटोक्तं लक्षणमपि न हृदयग्राहि अपह्नुत्यादौ उपमानोपमेययोरभेदस्य प्रतीतिसिद्धतया तत्रातिप्रसंगात् ।

ननु कथं नाम श्लिष्टपरम्परिते 'कमलावासकासारः' इत्यादावेकस्यारोपस्यारोपान्तरोपायत्वम्, यतः श्लेषेण कमलानामावासस्य, कमलाया वासस्य चाभेदमात्रमत्र प्रतीयते नैकत्रान्यारोपः, तस्य स्वतन्त्रनिर्देशापेक्षत्वादिति चेन्न, श्लेषेण शुद्धाभेदस्य प्रतीतौ सत्यां प्रकृतारोपसमर्थनाय मध्ये मानसस्य राजसम्बन्धिनि कासारसम्बन्ध्यभेदारोपस्य कल्पनात् ।

**१६—प्रश्नः—परिणामालङ्कारस्य किं लक्षणम् ? कश्च तत्र रूपकाद् भेदः ? दीक्षितोक्ते 'तारानायकशेखराय' इति परिणामोदाहरणे कथं कीदृशञ्च वैमत्यं पण्डितराजस्य ? सर्वमेतद् विविच्य सर्वस्वकारकृतं परिणामलक्षणं दूषणीयम् ।**

**उत्तरम्**-विषयी यत्र विषयात्मतयेव प्रकृतोपयोगी न स्वातन्त्र्येण स परिणामः अत्र च विषयाभेदो विषयिण्युपयुज्यते । रूपके तु नैवमिति रूपकादस्य भेदः ।

यच्च दीक्षितैर्वैयाधिकरण्येन परिणामे उदाहृतम् 'तारानायकशेखराये'ति, तत्र चिन्त्यते पद्येऽस्मिन् गिरिजासंगैकशृंगारिणि भवे कविकर्तृका नतिः प्रक्रान्ता, शृङ्गारिता च शेखरादीनि भूषणान्यपेक्षते इति आरोप्यमाणशेखररूपतयैव नद्या उपयोगे न स्वरूपेण । एवं दृशोऽपि तिलकरूपतयेति रूपकमेव भवितुमुचितम् न परिणामः । ननु 'परिणामे विषयाभिन्नत्वेन विषय्यवतिष्ठते' इत्युक्तम्, प्रकृते च विषयवाचकेभ्यो नद्यादिभ्यः परस्यास्तृतीयाया अभेदार्थकत्वात् शेखरादेश्च तदन्वयित्वात्कथं नात्र परिणाम इति चेन्न, विषयाभिन्नत्वेन विषयिणो भानेऽपि तेन रूपेण तस्यानुपयोगात् । 'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इति सर्वस्वकारलक्षणं दुष्टमेव । 'आरोप्यमाणस्य प्रकृतोपयोग.' इति वाक्यस्य सम्भवतोर्द्विविधयोरर्थयोः 'प्रकृतकार्ये उपयोगः' इत्यर्थस्वीकारे 'दासे कृतागसि' इति वयोदाहृते रूपकोदाहरणे आरोप्यमाणानां कण्टकानां प्रकृतखेदव्यथारूपकार्ये उपयोगेनातिप्रसंगात्, 'प्रकृतविषयात्मना उपयोगः' इत्यर्थाङ्गीकारे 'अथ पक्त्रिमृतामुपेयिवद्भिः' इति स्वोक्तव्यधिकरणपरिणामोदाहरणेऽव्याप्तेश्च, राजसङ्घट्टने उपायनस्यारोप्यमाणस्य स्वात्मनोपयोगसत्त्वेऽपि विषयवचोरूपतयोपयोगाभावात् । अत इदमुदाहरणं व्यधिकरणरूपकस्यैव भवितुमर्हति ।

**२०—प्रश्नः—ससंदेहालंकारं सपदकृत्यं निरूप्य 'अस्याः सर्गविधौ' इत्यत्र दीक्षितं प्रत्याचक्षाणस्य पण्डितराजस्य मतमुपपादयन्तु ।**

**उत्तरम्**—सादृश्यमूला भासमानविरोधिका समबला नानाकोटयवगाहिनी धी रमणीया सा संदेहालङ्कृतिः । 'अधिरोप्या हरस्य' इति पद्ये मिथिलाजनोक्तिभूते टच्चिन्ताभिव्यंजके संशयमात्रेऽतिव्याप्तिवारणाय सादृश्यमूलेति, सादृश्यज्ञानरूपदोषजन्येति तदर्थः । अत एव 'सिंहवत्प्रान्तरं गच्छ गृहं सेवस्व वाऽश्ववत्' इत्युपमाविकल्पे वाकारप्रतीतविरोधक-प्रान्तरगमन-गृहसेवनरूपनानाधर्माविगाहिनि सादृश्यविषयकेऽपि नातिप्रसंगः । तस्य सादृश्यात्मकत्वेन तज्ज्ञानजन्यत्वाभावात् । मालारूपकेऽतिव्याप्ति दूरीकर्तुम् भासमानविरोधिकेति । उत्प्रेक्षावारणाय समानभासकसामग्रीत्वार्थकं समबलेति विशेषणम् । 'स्थाणुर्वा पुरुषो वे'ति लौकिकसंशयनिवृत्तये रमणीयेति । एतद् विशेषणं सर्वालंकारसाधारणम् । उपस्कारकत्वमपि तादृशमात्रापि निवेशनीयमेव ।

संशये विरोधो न भासते मानाभावात् इति चेत् तर्हि—

सादृश्यहैतुका निश्चयसम्भावनान्यतरभिन्ना धी रमणीया संशयालंकृतिरित्येव लक्षणं बोध्यम् ।

'अस्याः सर्गविधौ' इत्यत्र चन्द्रादीनां धर्मिणामेवानेकत्वम्, प्रकारस्तु वर्णनीयवनितास्रष्टुत्वमेकमेवेत्यनेककोटित्वाभावाद् विरोधेन परस्परप्रतिक्षेपकतया निबद्धानेककोटयवगाहित्वरूपस्य संशयलक्षणस्याव्याप्तिमाहुर्दीक्षितास्तन्न, अत्र 'अस्याः सर्गविधौ यः प्रजापतिरभूत् स किं नु चन्द्रः, किं नु मदनः, किं वा नु वसन्तः' इति प्रजापतिधर्मिकत्वस्य चन्द्रत्वादिनानाकोटिकत्वस्य च ज्ञाने सत्त्वात् संशयत्वसौलभ्येऽव्याप्तिविरहात् । न चात्र चन्द्रादिधर्मिकः संशयो वक्तुं योग्यः । प्रजापतेः प्रथमोद्देशस्यासंगतेः ।

**२१—प्रश्नः—अप्पयदीक्षितालंकारसर्वस्वकारोक्तं लक्षणं विशदं निरस्य पण्डितराजमतेन भ्रान्तिमतो लक्षणं सोदाहरणं प्रतिपाद्य भिन्नकर्तृकोत्तरोत्तरभ्रान्तो परोक्तमुदाहरणं समुल्लिख्य तत्र पण्डितराजकृतो विचारः प्रस्तूयताम् ।**

**उत्तरम्**–'कविसम्मयसादृश्याद् विषये पिहितात्मनि । आरोप्यमाणानुभवो यत्र स भ्रान्तिमान् मतः' । इति दीक्षितोक्तं लक्षणं न समीचीनम्, रूपकव्यावृत्तये निवेश्यमानस्य पिहितात्मनीतिविषयविशेषणस्य वैयर्थ्यात् । रूपकवाक्ये वर्णनेनानुभवस्य जायमानत्वेऽपि आरोप्यमाणानुभवस्यावर्णनात् । ननु अनुभवान्तमत्र भ्रान्तेर्लक्षणम् अग्रिमं च भ्रान्तिमतः । तत्र भ्रान्तिलक्षणे रूपकातिव्याप्तिवारणाय पिहितात्मत्वं विषयविशेषणमिति चेन्न । अनुभवत्वघटितस्य भ्रान्तिलक्षणस्यानुभूयमानाभेदात्मके रूपकेऽप्रवृत्तेः । न च रूपकपदं तद्बुद्धि परम्, तथापि विषयतावच्छेदकानवगाहिनि 'मरकतमणिमेदिनीधरो वा तरुणतरस्तरुरेष वा तमालः ।' इति संशयेऽतिव्याप्तेर्दुरुद्धरत्वात्, 'सादृश्याद्वस्त्वन्तरप्रतीतिर्भ्रान्तिमान्' इति सर्वस्वकारकृतं लक्षणमपि नैव निर्दुष्टम्, संशयोत्प्रेक्षालंकारयोरतिप्रसंगापत्तेः । प्रतीतिपदस्य निश्चयपरत्वे रूपकज्ञानेऽतिव्याप्तेः । विषयतावच्छेदकानवगाहित्वेन निश्चये विशेषितेऽपि अतिशयोक्तिज्ञानेऽतिप्रसक्तेरवारणाच्च । 'सदृशे धर्मिणि तादात्म्येन धर्म्यन्तरप्रकारकोऽनाहार्यो निश्चयः सादृश्यप्रयोज्यश्रमकारी प्रकृते भ्रान्तिः । सा च पशुपक्ष्यादिगता यस्मिन् वाक्सन्दर्भेऽनूद्यते स भ्रान्तिमान्' इति पण्डितराजाभिमतं लक्षणं सर्वथा दोषमुक्तं युक्ततममवगन्तव्यम् । उदाहरणं पुनरधो लिखितं पद्यं बोध्यम्—

'कनकद्रवकान्तिकान्तया मिलितं राममुदीक्ष्य कान्तया ।
चपलायुतवारिदभ्रमान्ननृते चातकपोतकैर्वने ॥'

उत्तरोत्तरभ्रान्तौ दीक्षित उदाजहार—

'शिञ्जानैर्मञ्जरीति स्तनकलशयुगं चुम्बितं चञ्चरीकै-
स्तत्त्रासोल्लासलीलाः किसलयमनसा पाणयः कीरदष्टाः ।
तल्लोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकै-
रित्थं चोलेन्द्रसिंह ! त्वदरिमृगदृशां नाप्यरण्यं शरण्यम् ॥ इति ॥

**अत्र पण्डितराजेनातिमार्मिकी समालोचना कृता । यथा दीक्षितस्याविशेषज्ञत्वं पद्यनिर्मातुश्चासामर्थ्यं स्फुटमुपलक्ष्यते । तथाहि—स्तनकलशयुगे मञ्जरीसादृश्यं न कविसमयप्रसिद्धम्, अतस्तन्मूला भ्रमराणां भ्रान्तिरयुक्तोपनिबद्धम् । दोषान्तरमला तु भ्रान्तिर्नालङ्कारकोटिप्रविष्टा । अपि च स्तनयुगे कलशरूपकानुवादेन**

मञ्जरी भ्रान्तिरूपमलङ्कारान्तरमुपनिबध्यमानमुद्वेजयत्येव सहृदयान् । 'पाणयः कीरदष्टाः' इत्यत्र विधेयाविमर्शाद् विधेयान्तरमाकाङ्क्षितम् । 'जाता' इत्यस्याध्याहारेऽपि विवक्षितस्याविधेयत्वं विधेयत्वञ्चाविवक्षितस्य प्रसज्येत् । एवं 'तल्लापायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकैः' इत्यत्र पिकनिनदा न ताडनयोग्याः काकानाम्, येन तद्धिया आलपन्त्यस्तैस्ताड्येरन् । न वा पिकनिनदभ्रम आलपन्तीषु सम्भवति । सम्भवन् वा न सादृश्यमूलः । 'पिकनिकरधिये'ति युक्तः पाठः । तथा प्रथमद्वितीयचरणस्थयोः स्तनपाण्योः यथाकथञ्चित् व्यवहितजातान्वयमपि 'त्वदरिमृगदृशामि'ति पठ्यन्तमन्वेतुं शक्नुयात्, न तु तृतीयचरणस्थे 'आलपन्त्य' इति विशेषणे विशेष्यभावेन विभिन्नविभक्तिकत्वात् इति ताटस्थ्यमेव तासां स्यात् इति ।

**२२—प्रश्नः—प्रतिपदव्यावृत्ति-प्रदर्शनपूर्वकं भ्रान्तिमदलंकारलक्षणमुदाहरणे संगमय्य दीक्षितोक्तलक्षणेऽरुचिबीजं प्रदर्श्यताम् ।**

**उत्तरम्**—लक्षणम् एकविंशतितमप्रश्नसमाधानप्रसगे लिखितम् । पदकृत्यमत्र क्रियते-तद्यथा-मीलितं सामान्य-तद्गुण-वारणाय धर्मिग्रहणद्वयम् । रूपकवित्तिव्यावृत्तयेऽनाहार्य इति । संशयनिरासाय निश्चय इति । इदं रजतमिति रंगविशेष्यकबोधवारणाय चमत्कारीति । 'अकरुणहृदयप्रियतम' इत्यादौ नायिकासंदेशहरस्योक्तौ व्यज्यमानस्योन्मादस्य निराकरणाय सादृश्यप्रयोज्य इति । उदाहरणे लक्षणसंगमनप्रकारश्चेत्थमवसेयः—'कनकद्र' इति २१ प्रश्नोत्तरप्रसङ्गोक्तपद्ये कनकलताकान्तया कान्तयाऽऽश्लिष्टे श्यामवपुषि रामे चातकपोतकानां चपलालङ्कृतनवनीरदभ्रान्तिरुपवर्णिता । सा च भ्रान्तिः सादृश्यप्रयोज्यैवास्ते । चमत्कारिणी च आहार्यरूपा नास्त्येवेति भवति लक्षणसंगतिः । दीक्षितोक्तलक्षणेऽरुचिबीजमपि २१ प्रश्नसमाधानेऽन्वेष्टव्यम् ।

**२३—प्रश्नः—सपदकृत्यं सोदाहरणञ्च भ्रान्तिमदलंकारं लक्षयित्वा 'प्रमात्रन्तरधीर्भ्रान्तिरूपा यस्मिन्ननूद्यते । स भ्रान्तिमानिति ख्यातोऽलंकारे त्वौपचारिका' इत्यस्याः कारिकाया अवतरणं किमर्थं कृतं ग्रन्थकृतेति स्पष्टीक्रियताम् ।**

**उत्तरम्**—लक्षणोदाहरणे एकविंशति (२१) तमप्रश्नोत्तरप्रसंगे समुल्लिखित इति तत एवावसेये । पदकृत्यमपि द्वाविंशतितम (२२) प्रश्नसमाधाने कृतमेव ।

अवशिष्टभागस्योत्तरमिह केवलं लिख्यते । अत्र भ्रान्तिमात्रस्यैवालङ्कारता बोध्या । न चैवं 'भ्रान्तिमान् अलङ्कार' इति व्यवहारः कथमिति वाच्यम्, तथा व्यवहारस्यौपचारिकत्वात् । अत्रैवार्थे साक्षितां दापयति ग्रन्थकारः—'प्रमात्रन्तर' इति कारिकावतारणेन । उपचारोऽत्र भ्रान्तिभ्रान्तिमतोरभेदारोप एव ।

**२४—प्रश्नः—पण्डितराजोक्तं द्विविधमुल्लेखालंकारलक्षणं सोदाहरणमुल्लिख्य द्वयोः प्रकारयोः किं कृतश्चमत्कारोऽलंकारत्वप्रयोजक इति स्फुटीक्रियताम् ।**

**उत्तरम्**—एकस्य वस्तुनो निमित्तवशादनेकैर्ग्रहीतृभिरनेकप्रकारकं ग्रहणमुल्लेख इत्येकलक्षणम् । यत्रासत्यपि ग्रहीत्रनेकत्वे विषयाश्रयसमानाधिकरणानां सम्बन्धिनामन्यतमानेकत्वप्रयुक्तमेकस्य वस्तुनोऽनेकप्रकारकत्वम् इति द्वितीयं लक्षणम् । तत्र—

'नरैर्वरगतिप्रदेत्यथ सुरैः स्वकीयापगे-
त्युदारतरसिद्धिदेत्यखिलसिद्धसङ्घैरपि ।
हरेस्तनुरिति श्रिता मुनिभिरस्तसङ्गैरियं
तनोतु मम शं तनोः सपदि शन्तनोरङ्गना ॥

इति प्रथमस्य,

'दीनव्राते दयार्द्रा निखिलरिपुकुले निर्दया किं च मृद्वी
काव्यालापेषु तर्कप्रतिवचनविधौ कर्कशत्वं दधाना ।
लुब्धा धर्मेष्वलुब्धा वसुनि परविपद्दर्शने कांदिशीका
राजन्नाजन्मरम्या स्फुरति बहुविधा तावकी चित्तवृत्तिः ॥'

इति द्वितीयस्योदाहरणं बोद्धव्यम् ।

अत्रेदं बोध्यम्—प्रथमनिरूपितोल्लेखप्रकारे 'यं महाविष्णुरिति वैष्णवाः, शिव इति शैवाः, यज्ञपुरुष इति याज्ञिकाः, स्वभाव इति लोकायतिकाः, ब्रह्मेत्यौपनिषदा वदन्ति सोऽयमादिपुरुषो हरिः' इत्यादौ तत्तद्ग्रहीतृकतत्तत्प्रकारकज्ञानसमुदायस्य चमत्कारजनकताया अनुभवसिद्धत्वेनालङ्कारत्वम् । द्वितीये तु प्रकारे 'यः शिष्टेषु सदयो दुष्टेषु करालः' इत्यादौ तत्तद्भेदभिन्नस्य प्रकारसमुदायमात्रस्य

चमत्कारजनकता, न तु विद्यमानस्यापि ज्ञानांशस्य चमत्कारित्वेनाननुभवात्। चमत्कारनिबन्धनो ह्यलङ्कारभाव उपमादीनाम्। एवञ्च लक्षणद्वयान्यतरत्वमुल्लेख-सामान्यलक्षणतावच्छेदकम् इति मन्तव्यम्। परे तु प्रकारद्वयेऽपि वर्ण्यवृत्तित्वेन भासमानप्रकारसमुदाय एवोल्लेख इत्यपि वदन्ति।

**२५—प्रश्नः—अप्पयदीक्षितैरभिहिताऽपह्नुतिः का ? तत्र च को विरोधो ग्रन्थकृताम् ? स युक्तोऽयुक्तो वा ? इति सूक्ष्मेक्षिकया साटोपं निरूपयत।**

**उत्तरम्**—'अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सः, इति पद्यार्धेन लक्षण-मभिधायापरार्धेन पद्यस्य 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' इत्यनेन तस्योदाहरणं प्रदायि दीक्षितैः कुवलयानन्दाख्ये सन्दर्भे। तत्रायं विरोधो जगन्ना-थस्य, यदसौ नेममलङ्कारमनुमनुते उदाहरणालाभात्। दीक्षितप्रदत्तमुदाहरणं तु न सम्भवति तत्रापह्नुतिसामान्यलक्षणासंगमनात्। तथाहि—'प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः, विषयापह्नवे वस्त्वन्तरप्रतीतावपह्नुतिः' इति मम्मटालङ्कारसर्वस्कारलक्षणयोः प्रवृत्तनिषेध-विषयापह्नवशब्दाभ्याम् उपमेयतिरोभावस्यापह्नुतावावश्यकता सूच्यते नायं सुधांशुरित्यत्रोपमेयस्य प्रेयसी-मुखस्यातिरोधानं स्पष्टमेवेति नापह्नुतिर्भवितुमर्हति। 'प्रकृतस्य निषेधेन यदन्य-त्वप्रकल्पनम्। साम्यादपह्नुतिर्वाक्यभेदाभेदवती द्विधा।' इति चित्रमीमांसागत-दीक्षितलक्षणेऽपि प्रकृतस्योपमेयस्य निषेध उक्त इति स्ववचनविरोधमपि न चेत-यन्ते दीक्षिताः। अतो 'नायं सुधांशुः' इति दृढारोपं रूपकमेव। विमर्शिनीकार-स्याप्येतदेवाभिमतं प्रतिभाति यतोऽसौ 'न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते' इत्यत्र विषस्य निषेधपूर्वकं ब्रह्मस्वविषये आरोप्यमाणत्वात् दृढारोपं रूपकमेव नापह्नुतिरिति स्पष्टमेवावोचत्। अपि च यदि 'नायं सुधांशुः' इत्यत्र पर्यस्ता-पह्नुतिरुच्यते, तदा तत्र दीक्षितकृतस्य 'बिम्बाविशिष्टे' इत्यादिरूपकलक्षणस्या-तिव्याप्तिर्दुर्वारैव। विषयिणो निह्नवेऽपि विषयस्यानिह्नुतत्वात्। युक्त एव चायं विरोधः। यद्यपि नागेशाः 'अत्रेदं चिन्त्यम्—नेदं मुखं चन्द्रः' इति प्रसिद्धा-पह्नुत्युदाहरणेऽपि मुखनिषेधस्य चन्द्रारोपदार्ढ्यसम्पादकत्वस्य वक्तुम् शक्यत्वेना-नुभवसिद्धत्वेन चापह्नुतिमात्रस्योच्छेदापत्तेः। यदि निषेधपूर्वकारोपे चमत्कार-विशेषस्यानुभवसिद्धत्वादलङ्कारान्तरत्वम् तर्हि 'प्रकृतेऽपि तुल्यम्' इत्यादिना

दीक्षितोक्ति समर्थयितुम् यतन्ते । तथापि दुष्प्रयास एव स तेषाम् यतः 'नेदं मुखं चन्द्रः' इत्यादौ 'मुखं न' इति विषयतावच्छेदकपुरस्कारेण मुखस्योपमेयस्य निषेधः स्पष्ट इति तत्र न कस्यापि मतेन रूपकसंभावना ॥ 'मायं सुधांशुः' इत्यत्र तु 'प्रेयसीमुखं सुधांशुः' इति रूपके कापि बाधा नावलोक्यते ॥ अपह्नुतिः पुनर्बाधितैवेति पूर्वमुक्तमेवेति सहृदया एवाधिकमितो विमृशेयुः ।

२३—**प्रश्नः—सावान्तरभेदमपह्नुतिलक्षणं लक्ष्ये सङ्गमय्य अपह्नुतिध्वनिविषये मतान्तराणां साधुत्वमसाधुत्वं वेति विविच्यताम् ।**

**उत्तरम्**—उपमेयतावच्छेदकनिषेधसामानाधिकरण्येनारोप्यमाणमुपमानतादात्म्यमपह्नुतिः, अस्यालंकारस्यानेके प्रकाराः सम्भवन्ति, ते यथा—'स्मितं नैतत् किंतु' इत्यत्रानुग्राह्यनुग्राहकभावापन्नावयवकसंघातात्मकतया सावयवापह्नुतिः । 'श्यामं सितं च' इत्यत्र तथात्वाभावेन निरवयवा । इयमेव प्रतिज्ञातार्थवैपरीत्ये बाधकोपन्यासात् हेत्वपह्नुतिः । अस्मिन्नलङ्कारे क्वचित् नञादिभिः साक्षात् क्वचित् परमतसिद्धत्वाद्युपन्यासैश्च किञ्चिद्व्यवधानेन विषयस्य निषेधः, तत्रोभयत्र वाक्यभेदः । यथा पूर्वोक्तोदाहरणयोः यत्र पुनः मिषच्छलच्छद्मकपटव्याजादिशब्दैर्निषेधस्तत्र वाक्यैक्यम् । 'वदने···रसनामिषेण' इत्यादौ । एवम् कुत्रचित् अपह्नवपूर्वकत्वम्, क्वचिदारोपपूर्वकत्वम् क्वचित् विषयितादूप्य–विषयनिषेधयोरेकस्य शाब्दत्वम् एकस्यार्थत्वम्, क्वचिदुभयोः शाब्दत्वं क्वचिदुभयोरार्थत्वं विधेयत्वमनुवाद्यत्वञ्चेति । अपह्नुतिध्वनिर्विषये दीक्षितैरुदाहृतम्—'त्वदालेख्ये' इति पद्यम् । तन्न युक्तम् । तैर्हि तत्पद्यव्याख्यायामुल्लिखितम् 'चक्रसुपर्णलेखनेन नायं साधारणः पुरुषः, किंतु पुण्डरीकाक्षः' इति कयाचिद् व्यञ्जितम्' इति तत्र विचार्यते–अपह्नुतेस्तावद् द्वौ भागौ–उपमेयनिषेधः, उपमानारोपश्च । तयोस्तावदुपमानारोपभागः पुण्डरीकाक्षोऽयमित्याकारकश्चक्रसुपर्णलेखनेनाभिव्यङ्क्तुम् शक्यः, चक्रसुपर्णयोस्तत्सम्बन्धित्वात्, न तु 'नायं साधारणः पुरुषः' इत्युपमेयनिषेधभागोऽपि व्यंजकाभावात् । ननु साधारणपुरुषनिषेधमन्तरेण पुण्डरीकाक्षतादात्म्यारोपो दुर्घट इति सोऽपि व्यज्यते इति चेन्न, रूपकोच्छेदापत्तेः । न च 'मुखं चन्द्र' इति रूपके मुखत्वसामानाधिकरण्येन चन्द्रतादूप्यस्यारोप्यमाणतया न मुखनिषेधापेक्षेति वाच्यम्, तर्हि प्रकृतेऽपि तादृशसाधारणपुरुषत्व-

सामानाधिकरण्येन पुण्डरीकतादात्म्यारोपरूपरूपकस्यैव स्वीकर्तुमौचित्यात् । यदपि तेनोच्यते 'नायं पुण्डरीकाक्षः अपि तु मन्मथः' इत्यादि, तत्र यद्यपि चक्रसुपर्णदूरीकरणेन 'नायं पुण्डरीकाक्षः' इति निषेधः, पुष्पचापमकरयोर्लेखनेन च 'मन्मथोऽयमि'त्युपमानारोपश्च भवितुं योग्यो व्यङ्ग्यः । तथापि नासावपह्नुतिः 'प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम्' इति दीक्षितलक्षणस्यैव तत्रासत्त्वात्, निषेध्यस्य पुण्डरीकाक्षस्यावर्ण्यत्वेनाप्रकृततया प्रकृतनिषेधाभावात् । एवञ्च नेदमपह्नुतिध्वनेरुदाहरणं युक्तम्, अपि तु 'दयिते रदनत्विषां मिषादि'त्यादि बोध्यम् ।

**२७–प्रश्नः–किमुत्प्रेक्षालक्षणम् ? लक्षणद्वयं कथं विभज्यत ? कुत्र कथमनया समन्वयः ? प्राचीनाभिमतोत्प्रेक्षालक्षणस्य धर्मोत्प्रेक्षायां सङ्गतिप्रकारः कः ? इत्यादि निर्मलं निराकुलञ्च समाकलयत ।**

**उत्तरम्**–तद्भिन्नत्वेन तद्भाववत्त्वेन वा प्रमितस्य पदार्थस्य रमणीयतद्वृत्ति-तत्समानाधिकरणान्यतरतद्धर्मसम्बन्धनिमित्तकं तत्त्वेन तद्वत्त्वेन वा सम्भावन-मुत्प्रेक्षा ।

तद्भिन्नत्वेन प्रमितस्य पदार्थस्य रमणीयतदवृत्तिधर्मनिमित्तकं तत्त्वेन सम्भावनञ्चेदुत्प्रेक्षा तर्हि तद्भाववत्त्वेन प्रमितस्य पदार्थस्य तन्निमित्तक-तत्त्वेन सम्भावनं किमिति नोत्प्रेक्षा स्यात् अर्थात् एकविधस्य सम्भावनस्योत्प्रेक्षा-त्वाङ्गीकारं किमपि विनिगमकं नास्तीति विनिगमकाभावात् अन्योन्याभा-वघटितमिवात्यन्ताभावघटितमपि लक्षणं स्वीकार्यम् । अतो लक्षणद्वयविभाग-इति बोद्धव्यम् । तत्रान्योन्याभावघटितलक्षणस्य 'कान्ते तवाननं मन्ये कलङ्करहितं विधुम्' इत्यादौ समन्वयः, विधुभिन्ने मुखे रमणीयाह्लादकत्वधर्मनिमित्तकस्य तादात्म्येन चन्द्रसम्भावनस्य सत्वात् । अत्यन्ताभावघटितलक्षस्य च 'निधि लावण्यानाम्' इति पद्ये मोहात्यन्ताभाववति ब्रह्मणि धर्मिणि मोहवत्त्वेन मोहसमानाधिकरणाविचार्यकारित्वधर्मनिमित्तकसम्भावनस्य सत्त्वादवगन्तव्यः समन्वयः ।

प्राचीना मम्मटभट्टादयः 'सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्' इति लक्षयित्वा सर्वत्राभेदेनैव विषयिणो विषये उत्प्रेक्षणमुरीकुर्वन्ति न सम्बन्धान्तरेण ।

नन्वेवम् 'मुखं चन्द्रं मन्ये' इत्यादौ विषयिणश्चन्द्रस्य मुखेऽभेदेनान्वयसम्भवेऽपि 'अस्यां मुनीनामपि मोहमूहे' इत्यादौ धर्मस्वरूपोत्प्रेक्षायां का गतिः तत्र मुनिरूपे धर्मिणि मोहरूपधर्मस्यैव समवायेन सम्भावनायाः प्रतीयमानत्वादिति चेन्न। तत्रापि मुनिकर्तृकविलोकनादौ विषये मोहस्य तादात्म्येनैवोत्प्रेक्षणात्। एवम् 'लिम्पतीव तमोऽङ्गानि' इत्यत्र न कर्तरि लेपनकर्तृत्वादेरुत्प्रेक्षणम् तस्याख्यात-विशेषणत्वेनैकदेशत्वात्। किन्तु तमःकर्तृकव्यापनादावेव लेपनाद्युत्प्रेक्ष्यते। इत्थमेव सर्वत्र धर्मोत्प्रेक्षास्थले प्राचीनाभिमतलक्षणसंगतिरवसेया। पण्डित-राजस्तु लक्षणनिर्माणस्य पुरुषाधीनतया सर्वत्राभेदेनैवोत्प्रेक्षणमित्यत्र न मानम्, तथा च 'अस्यां मुनीनामपि मोहमूहे'—'लिम्पतीव तमोऽङ्गानि' इत्यादौ समवा-यादिना सम्बन्धान्तरेणेवोत्प्रेक्षणमिति सरलम् पन्थानमाविष्करोतीति दिक्।

**२८—प्रश्नः—क्रियास्वरूपोत्प्रेक्षां सुन्दरं समुदाहृत्य तत्रत्यं विचारप्रकारं चारु चर्चध्वम्।**

**उत्तरम्**—'कलिन्दजानीरभरेऽर्धमग्ना बकाः प्रकामं कृतभूरिशब्दाः।
ध्वान्तेनवैराद्विनिगीर्यमाणाः क्रोशन्ति मन्ये शशिनः किशोराः॥

इति क्रियास्वरूपोत्प्रेक्षाया उदाहरणम्। अत्र प्रथमान्तविशेष्यकबोधवादिनां मते अभेदेन कलिन्दजानीरार्धमग्न—कृतभूरिशब्दविशिष्टेषु विषयेषु ध्वान्तकर्तृकवैर-हेतुकनिगरणकर्माभिन्नोत्प्रेक्षितशशिकिशोरतादात्म्योत्प्रेक्षणपूर्वकं क्रोशनकर्तृत्व-धर्मं उत्प्रेक्ष्यते। अर्थात् बकेषु विषयेषु विषयिणाम् शशिकिशोराणां तादात्म्येन सम्भावनमिति प्राग्मूलभूतधर्म्युत्प्रेक्षा, ततः 'मन्ये क्रोशन्ति' इति प्रतिपाद्या-धर्मोत्प्रेक्षा मुख्येति।

तत्र धर्म्युत्प्रेक्षायां श्वैत्यरूपो धर्मो विषयगतो निमित्तम्। धर्मोत्प्रेक्षायाञ्च श्वैत्यसमानाधिकरणो निगरणकर्मत्वरूपी धर्मो निमित्तम् विषयगतः, इति वस्तु-स्थितिः, परन्तु निगरणकर्मत्वरूपो धर्मः शशिकिशोरेष्वेव तिष्ठेत् न बकेषु, अत-स्तस्य धर्मस्य बकेषु सम्पत्तये शशिकिशोरतादात्म्यं प्रथममुत्प्रेक्ष्यते एवञ्च यथा विशिष्टोपमायामुपमानोपमेयविशेषणतद्विशेषणानामार्थौपम्यम्, तथात्रापि विषयाणाम् बकानां विशेषणीभूतं यदर्धमज्जनम् तद्विशेषं यद्यमुनाजलम्, तयोः क्रमशः मूलोत्प्रेक्षायां विषयिणो ये शशिकिशोराः तद्विशेषणेन निगरणेन तस्यापि

विशेषणीभूतेन ध्वान्तेन सहाभेद आर्थः। ततो ध्वान्तकर्तृकनिगरणे सिद्धे मुख्योत्प्रेक्षानिर्वाहः। क्रोशनशब्दयोरपि बिम्बप्रतिबिम्बभावेनाभेदः। तेन यमुनाजलाधमग्नकृत्भूरिशब्दोभयाभिन्नबका ध्वान्तनिगीर्यमाणशशिकिशोरोभयाभिन्नाः क्रोशनक्रियानुकूलव्यापारवन्त इवेति बोधाकारः सिद्धयति। व्यापारमुख्यविशेष्यकबोधवादिनां मते तु अभेदेन क्रोशनक्रियोत्प्रेक्षा। ननु शब्दनं न पृथक् निर्दिष्टं कथं तद् विषयतया विवक्ष्येत इति चेन्न, शब्दकर्तृष्वेव शब्दनस्याध्यवसायेन निर्वाहात्। अत्र कल्पे क्रोशनक्रियायां तादृशबका विशेषणम्, तादृशबकेषु चाभेदेन तादृशशशिकिशोराः विषयविषयिविशेषणानां प्राग्वदेव बिम्बप्रतिबिम्बभावेनाभेदप्रतीतिः।

**२६—प्रश्नः— प्रतिपदव्यावृत्तिप्रदर्शनपुरस्सरमुत्प्रेक्षालक्षणमभिधाय दिवा-**

**दिवानिशं वारिणि कण्ठदघ्ने दिवाकराराधनमाचरन्ति।**

**वक्षोजताय किमु पक्ष्मलाक्ष्यास्तपश्चरत्यम्बुजपङ्क्तिरेषा।'**

**इत्यत्र किन्निमित्तोत्प्रेक्षेत्यवधार्यताम्।**

**उत्तरम्**—लक्षणमस्यालङ्कारस्य सप्तविंशतितम (२७) प्रश्नस्य समाधाने कृतम्। पदव्यावृत्तिरधुना विधीयते-तद्भिन्नत्वेन प्रमितस्येत्यनेन सम्भावनाया आहार्यता सिद्धयति, तेन 'रामं स्निग्धतरश्यामम्' इत्यत्र रामे धाराधरसंभावनया मयूरा नृत्यन्तीति तात्पर्यके नातिव्याप्तिः, तत्रत्यसम्भावनाया आहार्यरूपत्वाभावात्। रमणीयतद्धर्मनिमित्तकमिति कथनेन 'वदनकमलेन बाले' इत्यत्र जगज्जयसम्भावनायां नातिप्रसंगः। धर्मगतरमणीयताविशेषणेन 'प्रायः स्थाणुनाऽनेन भवितव्यम्, नूनं पुरुषेणानेन भाव्यम्, 'दूरस्थोऽयं देवदत्त इवाभाति' इत्यादौ निश्चलत्वादिव साधारणधर्मनिमित्तायां सम्भावनायां नातिव्याप्तिरिति बोद्धव्यम्। 'दिवानिशं वारिणी'ति पद्यं जातिफलोत्प्रेक्षाया उदाहरणम्। अत्र प्रकृतिसिद्धं जलावस्थानमेव तपश्चरणक्रियात्वेनाध्यवसितम्। तस्याश्च क्रियाया वक्षोजत्वजातिरूपं फलमुत्प्रेक्ष्यते। निमित्तमिह मसृणत्वसमानाधिकरणं समानाकारत्वमेव मन्तव्यम्।



**ग्रन्थकार परिचयः**

( १ )

चकास्ति लघुकायोऽपि कोविदामोदवर्धनः ।
'मिथिला-स्वर्णदी-शोभि-सरोजश्रियमाश्रितः ॥

( २ )

'नवानी' नामको ग्रामी गुण-ग्रामाभिमण्डितः ।
मण्डले दरभङ्गाख्ये विख्यातबुधजन्मभूः ॥ ( युग्मकम् )

( ३ )

तस्मिन् मातृपुरे पित्र्यपुरं 'शतलखा'भिधम् ।
विहाय विद्यामध्यैष्ट विशिष्टां योऽतिमिष्टवाक् ॥

( ४ )

समाप्याध्ययनं यश्च 'संग्रामपुर' वर्तिनि ।
विद्यालये विप्रपुत्रान् पञ्चवर्षाण्यपाठयत् ॥

( ५ )

'मुजफ्फरपुरे' राज-महाविद्यालये तु यः ।
साहित्यविषयस्यास्ते प्रधानाध्यापकोऽधुना ॥

( ६ )

'मदनमोहिन' नाम सुधीरसौ
कृतिमिमामकरोत् कुतुकाकुलः ।
कलयिता किल शिष्यकुलं फलं
यदि तदा सफलो भविता श्रमः ॥

इति पण्डितराजजन्नाथकृते 'रसगङ्गाधरे' द्वितीयाननस्योत्प्रेक्षालङ्कारान्तभागस्य प्रश्नोत्तरी समाप्ता ।



**समाप्तं च रसगङ्गाधररहस्यम्**

